देवे रघुनाथे दया कृपा प्रीतिस्तावदेव संभवतीति। यावद्यागेऽवासना यागे क्रियमाणेऽवासना स्वर्गादिभोगप्राप्तये इच्छाराहित्यम्। तस्मात्फलराहित्येन यो यागः स रामप्रीतये भवतीत्यर्थः॥ कृष्णपक्षे—कृष्णे परब्रह्मस्वरूपतामवधारयन्तो दैत्याः पुनः परामर्शं चक्रुरित्याह—यादवदेवता कृष्णमूर्तिर्वेदे उपनिषद्भागे या गातुं निरूपयितुं योग्या न तु साक्षात्कारं कर्तुमथवान्येन निरूपयितुं न शक्यते इत्याह—नासवादिति। असुसंबन्धि आसवं प्राणात्मकं शरीरम्। अवेत्युपसर्गोऽवलक्षणत्वद्योतकः। तथा चावलक्षणान्मनुष्यदेहात्सकाशान्नहि निरूपयितुं शक्यते। एवं प्रथमं तस्य निरूपणासंभवे तस्य हननमस्माभिरसंभावितमेवेत्यर्थः। वस्तुतस्तु आसवात्। आसवादिति मदजननवस्तुमात्रोपलक्षणम्। तस्मान्न अवया न ज्ञेया। तन्निमित्तमासवादुर्ज्ञेयेत्यर्थः। अवयेति अवयायते इत्यवया। 'आतोऽनुपसर्गे कः' इति कः। पश्चाट्टाप्। अवपूर्वको यातिरेतिश्च ज्ञानार्थः॥

अथ स्वयंवरदर्शनार्थं कौशिकेन सह जनकगृहं प्रति गतो रामस्तत्र किं कृतवानित्याह—

सभास्वये भग्नमनेन चापं कीनाशतानद्धरुषा शिलाशैः।
शैलाशिषारुद्धनताशनाकी पञ्चानने मग्नभये स्वभासः॥ ११॥

अये श्रोतः, अनेन रामेण सभासु शिलाशैः सह चापं भग्नम्। सभासु स्थितासु शिलावद्दृढा जानकीविषयिण्याशा येषां ते शिलाशाः राजानस्तैः सह चापं भग्नम्। न केवलं चापं भग्नम्। राजानो भग्ना भग्नमनोरथाः कृता इत्यर्थः। कीनाशतानद्धरुषा कीनाशस्य भावः कीनाशता यमरूपता तया आनद्धोऽभिनिविष्टो रावणस्तस्य रुषा कोपेन। प्राचीनवैरानुबन्धिनिमित्तेन पूर्वं धनुरुद्धर्तुं प्रवृत्तो रावणो धनुषाधः पतितः, परंतु न हत इति रुषा कोपेनेवेत्यर्थः॥ कृष्णपक्षे—गोवर्धनोद्धरण इन्द्रो लाघवं प्राप्त इत्याह—पञ्चानने नृसिंहे कृष्णे स्वभासः स्वप्रतापान्मग्नभये निःशङ्कं यागं कारयितुं प्रवृत्ते सति शैलाशिषारुद्धनताशनाकी दृष्टः शैलस्य गोवर्धनस्याशिषा अभीष्टपूरणेन रुद्धा रोधं प्रापिता अतएव नता भग्ना हविर्ग्रहणेच्छा यस्य तथाविधो नाकी स्वर्गाधिपोऽभूदित्यर्थः। 'यो गोवर्धनभूधरं करधृतं लीलाम्बुजन्मायितं कृत्वा सप्तदिनानि नाचलदपाद्गोपांश्च घोरापदः। यश्चक्रे निजशासने हरिविरिञ्च्याखण्डलादीन्सुरानुद्दण्डानपि सोऽवताज्जगदिदं गोपालराजो हरिः॥' इति श्रीभागवते दशमस्कन्धे॥

अथ स्वयंवरार्थमागतानां राज्ञां वर्णयन्नाह—

न वेद यामक्षरभामसीतां का तारका विष्णुजितेऽविवादे।
देवाविते जिष्णुविकारता का तां सीमभारक्षमयादवेन॥ १२॥

यामक्षरभामसीतां लोको न वेद। अक्षरमविच्युतं भाम सौभाग्यं यस्याः सा अक्षरभाम्नी सा चासौ सीता च तां न जानातीत्यर्थः। अविवादे विष्णुजिते का तारका विष्णुना रामचन्द्रेण जितं विष्णुजितं तस्मिन्विष्णुजिते अविवादे सर्वसंमते सति का तारका ता-

रकात्वं का प्राप्नोतीत्यर्थः । तारकासंबन्धस्तु चन्द्रं विनान्येन सह न भवति । प्रकृते रामचन्द्रेण सह सीतैव तारकात्वं प्राप्तुमर्हति । नान्येनेत्यर्थः ॥ कृष्णपक्षे—गोकुलोपरि क्षुब्धस्येन्द्रस्य न किंचिच्चलतीत्याह—सीम्नो भारः सीमभारः सीमा गिरिमर्यादा तस्या भारक्षमश्चासौ यादवश्च तेन देवशक्त्या अविते रक्षिते गोकुले जिष्णोरिन्द्रस्य शिलावर्षणादिविकारता का । न कापीत्यर्थः ॥

अथ धनुषि भग्ने सति जानक्या रामो वृत इत्याह—

तीव्रगोरन्वयत्रार्यो वैदेहीमनसो मतः ।
तमसो न महीदेवैर्योत्राऽयन्वरगोव्रती ॥ १३ ॥

तीव्रा गावः किरणा यस्यैवंविधस्य तीव्रगोः सूर्यस्यान्वयं वंशं त्रायन्ते तेऽन्वयत्राः सूर्यवंशाभिमानरक्षका दिलीपादयस्तेष्वार्यः श्रेष्ठः सूर्यवंशालंकरणं रामः वैदेहीमनसो मतः जानक्या मनःपूर्वकं वृतः । धनुःपणबन्धेनेत्यर्थः ॥ कृष्णपक्षे—ब्रह्मसत्रं प्रति गतः कृष्णस्तैर्न मानित इत्याह—अत्र ायन्वरगोव्रती कृष्णः अत्र ब्रह्मसत्रे आयन्प्राप्तः वरा भाग्यशालिन्यो गाव एव व्रतं परिपालितत्वेनोपस्थितं यस्यासौ गोव्रती कृष्णः तमसोऽज्ञानान्महीदेवैर्ब्राह्मणैर्न मानित इत्यध्याहारः ॥

अथ जानक्याः पारमार्थिकं स्वरूपं वर्णयन्नाह—

वेद या पद्मसदनं साधारावततार मा ।
मारता तव राधा सा नन्द सद्मप यादवे ॥ १४ ॥

साधारा मा अवततार । आधारेण विष्णुना सह लक्ष्मीः अवतारं चक्रे । सा का । या पद्मसदनं वेद पद्ममेव सदनं अधिवासस्थलं वेद ज्ञातवती । अनेन लक्ष्म्याः पूर्णावतार इति सूचितम् । अथ वा पद्मं विष्णोश्चरणकमलं तदेव सदनं विश्रामस्थलं जानातीति ॥ कृष्णपक्षे—अथ कापि गोपिका नन्दं प्रति राधायाः पैशून्यं वदति—भो सद्मप गृहाधीश नन्द, सा तव राधा । सेति तच्छब्देन विदितवृत्तान्तेति सूचितम् । तथा यादवे सैवं कृष्णे मारता मदनरूपता इत्येवं समाचारोऽस्ति । अनेन कृष्णस्य वयःसंबन्धिनी वर्णिता भवति ॥

अथेश्वरस्य धनुर्भङ्गमाकर्ण्य परशुरामोऽभ्यगादित्याह—

शैवतो हननेऽरोधी यो देवेषु नृपोत्सवः ।
वत्सपो नृषु वेदे यो धीरोऽनेन हतोऽवशैः ॥ १५ ॥

नृपोत्सवः शैवतो हनने अरोधी । नृपस्य आगतस्य दशरथस्योत्सवो यस्मात्स नृपोत्सवो रामः शिवस्य पक्षपातीति शैवः परशुरामस्तस्माच्छैवतः हनने कोपाविर्भावेऽप्यरोधी न रोधं प्राप्तवान् । अकुण्ठितशक्तिरासीदित्यर्थः । विमानस्थितेषु देवेषु पश्यत्सु सत्सु ॥ कृष्णपक्षे—अथ कृष्णस्वरूपं धेनुकवधं चाह—यः वेदेऽस्ति वेदे प्रतिपादितोऽस्ति स नृषु वत्सपोऽभूत् । अनेन वत्सपेन कृष्णेन धीरो धेनुकः अवशैः असाध्यैस्तज्जातीयैरन्यैः सह हतः । मारित इत्यर्थः ॥

अथ परशुरामो रामं प्रति सक्रोधं वदति—

नगोपगोऽसि क्षर मे पिनाकेऽनायोऽजने धर्मधनेन दानम् ।
नन्दानने धर्मधने जयो ना केनापि मे रक्षसि गोपगो नः ॥ १६ ॥

भो क्षर नश्वर, मे पिनाके त्वं नगोपगः असि । यद्यपि त्वया जीर्णं धनुर्भग्नं तथापि मदानते धनुषि नगस्य पर्वतस्योप समीपे गच्छतीति नगोपगः पाषाणस्तत्तुल्योऽसि। मदीयधनुषोऽतिगुरुत्वेन निश्चेष्टो भवसीत्यर्थः । एवमेतादृशे त्वयि जनकेन यत्कन्यादानं कृतं तदयुक्तमित्याह—धर्मधनेन कन्यालक्षणेन अजने यद्दानं सः अनायः। अजनोऽदानपात्रम्। एवं अदानपात्रे त्वयि यद्दानं कृतं सः अनायः नयो नीतिस्तत्संबन्धी नायः, न नायः अनायः । अनीतिरित्यर्थः ॥ कृष्णपक्षे—दैत्यवधं दृष्ट्वा नन्दः कृष्णं स्तौति—भोः कृष्ण, त्वं नन्दानने नासि । नन्द एव आननं मुख्यो यस्मिन्गोकुले तस्मिन् ना पुरुषः परमात्मा असि। बलवत्त्वात् । अतएव किंलक्षणे नन्दानने। धर्मधने जन्मान्तरीयधर्मैरर्जितं तस्मिंस्तथा नः अस्माकं जयोऽपि त्वमेवासि । केनापि सुकृतविपाकेन गोपगः गोपविशेषेण वर्तमानः सन् मे इति मां रक्षसि ॥

अथ रामं राज्याधिकारिणं दृष्ट्वा कैकेयी सापत्नभावं दर्शयतीत्याह—

ततान दाम प्रमदा पदाय नेमे रुचामस्वनसुन्दराक्षी ।
क्षीरादसुं न स्वमचारु मेने यदाप दाम प्रमदा नतातः ॥ १७ ॥

आमस्वना अपरिपक्ववचना तथाविधा सुन्दराक्षी कैकेयी पदाय राज्यप्राप्तये यद्दाम निर्बन्धकारणं ततान विस्तारयामास। स्वपुत्राय राज्यं देयमिति दशरथाय निर्बन्धं चकारेत्यर्थः । आमस्वनेति पदेन नेदं मातृकृत्यमिति सूचितम् । अथ कथं दाम ततानेत्याह—इमे रुचा न रुचा दीप्त्या इमे रामादयः पदयोग्या न भवन्ति । तथा तस्याः किं लौकिकं भयं नास्तीत्याह—प्रमदेति । प्रकृष्टो गर्वो यस्याः सा तथा ॥ कृष्णपक्षे—अथ कदाचित्कृष्णेन दधिभाण्डे भग्ने दुग्धनाशे जाते यशोदायाः अतिश्रमोऽभूदित्याह—प्रमदा यशोदा क्षीरात्सकाशादसुं प्राणमपि स्वकीयं न मेने । यथा क्षीरे ममता तथा प्राणे मा भूदित्यर्थः । अथ कृष्णबन्धनार्थं यद्दाम आप प्राप तदचारु कार्यक्षमं न भवतीति मेने। अतः दामपूरणहेतोर्नता नम्रा । परिश्रान्ताभूदित्यर्थः ॥

अथ वनवासार्थं रामे प्रस्थिते सति अहल्योद्धारणप्रसङ्गमाह—

तामितो मत्तसूत्रामा शापादेष विगानताम् ।
तां नगाविषदेऽपाशा मात्रासूत्तमतो मिता ॥ १८ ॥

मत्तसूत्रामा तां इतः प्राप्तः मत्तः काममोहितः सूत्रामा इन्द्रस्तां प्रति प्रसिद्धामहल्यां प्रति गतः । 'सूत्रामा गोत्रभिद्वज्री' इत्यमरः। तथा एष सूत्रामा इन्द्रः शापाद्विगानतां इतः गौतमकृतात् विगानतां सहस्रभगत्वादिलक्षणां प्राप्तः ॥ कृष्णपक्षे—पूर्वश्लोके यशोदया कृष्णः दाम्ना बद्ध इति निरूपितं तत्र यमलार्जुनोन्मूलनप्रसङ्गमाह—तां व्यवस्थामनुभूय

नगाविषदे कृष्णे सति यशोदा मात्रासु अपाशा तथा उत्तमतो मिता अभूत् । न गच्छतस्तौ नगौ स्थावरौ वृक्षौ यमलार्जुनौ ताभ्यां अविषमम्रृतं मोक्षः तत्प्रदे कृष्णे सति यशोदा-मात्रासु दधिदुग्धादिविषयेषु अपाशा अनिर्बन्धा सती उत्तमतः अलौकिककर्म कर्तुः कृ-ष्णान्मिता समर्यादाभूत् ॥

अथ शूर्पणखायाः प्राप्तायाः नासिकानिकृन्तनं कृतमिति शालिनीछन्दसाह—

नासावद्यापत्रपाज्ञाविनोदी धीरोऽनुत्या सस्मितोऽद्याविगीत्या ।
त्यागी विद्यातोऽस्मि सत्यानुरोधी दीनोऽविज्ञा पात्रपद्यावसाना ॥ १९ ॥

शूर्पणखा तावन्नासावद्यापत्रपास्ति । नासा नासिका तस्या अवद्यं विगानं छेदलक्षणं तत्र अपत्रपा निर्लज्जास्ति । लक्ष्मणस्तु आज्ञाविनोदी आज्ञया रामाज्ञया विनोदो यस्या-तिविनोदी । तथा धीरः उदात्तः श्रीरामस्तु अनुत्या शूर्पणखाकृतया स्तुत्या उपालम्भेन अद्याविगीत्या अकीर्तिख्यापनेन सस्मितोऽभूत् ॥ कृष्णपक्षे—नारदशापादुन्मोचि-ताभ्यां कुबेरपुत्राभ्यां स्तुतः कृष्णस्तौ प्रति स्वरूपमाह—अहं विद्यातः ज्ञानतस्त्यागी ज्ञानप्रदोऽस्मि । तथा सत्यानुरोधी सत्यं परब्रह्म तत्र अनुरोधोऽत्यासक्तिर्यस्य स तथा । लोकस्तु दीनः विषयसुखासक्तोऽस्ति । अविज्ञा अविद्या तु पात्रपद्यावसाना पात्रं ज्ञान-पात्रं मद्भक्तस्तस्य पद्या पद्धतिर्ज्ञानमार्गनिष्ठत्वं तेनैवावसानं नाशो यस्याः सा तथोक्ता । एवं सति शापनिर्मुक्तिः क्रियत इत्यर्थः ॥

अथ पञ्चवटीवने सपरिग्रहे रामे कृताधिवासे सति किंचिदपूर्वं जातमित्याह—

संभावितं भिक्षुरगादगारं याताधिराप स्वनघाजवंशः ।
शवं जघान स्वपराधिताया रङ्गादगारक्षुभितं विभासम् ॥ २० ॥

भिक्षुः संभावितमगारमगात् । भिक्षुरूपधरो रावणः संभावितं पूर्वं निर्मायकत्वेन ज्ञातं अगारं पञ्चवटीस्थलं अगात् । ततः स्वनघाजवंशः याताधिः सन् आप । सुतरां अनघः निष्पापः एवंविधोऽजवंशो ब्रह्मवंशो रावणः यातो गतः आधिश्चिन्ता यस्य जानकीं दृष्ट्वा निश्चितः जानकीं प्राप । निष्पापवंशोत्पन्नोऽप्येतादृशं निन्द्यं पापकर्माकरोदित्याश्चर्यादिति सू-चितम् ॥ कृष्णपक्षे—पूर्वोपक्रान्तः कृष्णो रङ्गाद्रङ्गस्थानात्सकाशात् शवं चिन्तयापूर्वमेव गतप्राणं कंसं जघान । किंभूतम् । अगारक्षुभितम् । अगारं राजकीयपरिवारस्तस्मिन्क्षु-भितं सक्रोधम् । एष चाणूरघाती कृष्णो बहिः कथं न निःसार्यत इति । पुनः किंभूतम् । विभासं विच्छायं गतकान्तिम् । सद्योऽमृतचिह्नयुतमित्यर्थः । अथ कस्माद्धेतोर्जघानेत्याह— स्वपराधितायाः । अपराधिनो भावः अपराधिता सुतरामपराधिता तस्यास्तथा । पितृ-निर्बन्धाग्रजहननपूतनादिकूटरचनादयो येऽपराधास्तत्कर्तृत्वादित्यर्थः ॥

अथ मृगयापरावृत्तस्य रामस्य जानकीमपश्यतो निर्वेदमाह—

तयातितारस्वनयागतं मा लोकापवादद्वितयं पिनाके ।
केनापि यं तद्विदवाप कालो मातंगयानस्वरतातियातः ॥ २१ ॥

तया मागतं तया जानक्या मेति धिक् मृषैव गतं निष्क्रान्तम्। अथ सा स्वतो न गता बलात्कारेण नीता भविष्यतीत्याह—किंभूतया। अतितारस्वनया। उच्चैराक्रोशमानयापि। एवं तस्यां गतायां पिनाके लोकापवादद्वितयं जातम्। पिनाके पुरुषार्थाधिष्ठाने लोकापवादद्वितयं अज्ञानेन मृगपृष्ठतो धावनं स्त्रीहानिश्चेति अपवादद्वितयम् जातमित्यर्थः॥ कृष्णपक्षे—कंसहननात्पूर्वरङ्गमाह—यं कंसं केनापि प्रकारेण कालः कृतान्तोपमः कृष्णः अवाप। ननु परब्रह्मस्वरूपस्य कृष्णस्य कंसद्वेषः कथमित्याह—किंभूतः कालः। तद्वित् तदुपस्थितं कंसनिबन्धनं वेत्तीति तद्वित्। अथ स कः प्रकारस्तमाह—किंभूतः कालः। मातंगयानस्वरतातियातः। मातंगः कुवलयापीडस्तस्य यानं धावनं स्वरश्च तद्याक्रोशस्तमतिलङ्घ्य यातः। कुवलयापीडं क्रोशन्तं मारयित्वा रङ्गं प्राप्त इत्यर्थः॥

अथ रामस्य पुनर्जानकीं प्रति निर्वेदोक्तिमाह—

शवेऽविदा चित्रकुरङ्गमाला पञ्चवटीनर्म न रोचते वा।
वातेऽचरो नर्मनटीव चापं लामागरं कुत्रचिदाविवेश॥ २२॥

भो जानकि, अविदा अज्ञानेन मया सह पञ्चवटीनर्म न रोचते वा। येन त्वं गतासीत्यर्थः। अथ तदेवाज्ञानं प्रकटयन्नाह—शवे शवीप्रेयराक्षसे चित्रकुरङ्गमालास्तीति मायामृगमजानता। मयेत्यर्थः॥ कृष्णपक्षे—कृष्णस्य सामर्थ्यं कंसहननात्पूर्वमेव प्रकटीभूतमित्याह—यः कृष्णः वाते वात्याभूतदैत्ये तृणावर्ते अचरः अचलोऽभूत्तथा लामागरं कुत्रचिदाविवेश। लामा पूतना तस्याः गरं विषं नर्मेव क्रीडामात्रमिव कुत्रचिदाविवेश। न कृष्णे अनेन बाल्ये एतावन्तं पुरुषार्थं कृतवान्किं पुनर्यौवने इति सूचितम्। एवमेतदुभयं सदृष्टान्तमाह—किमिव। नर्मनटी चापमिव नटी नर्तकीचापं भ्रूभङ्गमात्रं दर्शयति। तद्वदित्यर्थः॥

अथ जानकीं स्कन्धे गृहीत्वा सत्वरं निर्गतस्य रावणस्य जटायुना साकं सङ्गोऽभूदिति रथोद्धतयाह—

नेह वा क्षिपसि पक्षिकंधरा मालिनी स्वमतमत्त दूयते।
ते यदूत्तमतम स्वनीलिमाराधकं क्षिपसि पक्षिवाहने॥ २३॥

जटायुः रावणं प्रति वदति—भो स्वमतमत्त, इयं मालिनी दूयते। स्वमतं स्वाग्रहस्तेन मत्त उन्मत्तः स्वाग्रहमेव करोषि परकीयविचारं न शृणोषि। असावधानत्वादित्यर्थः। मालिनी अतिसुकुमारा जानकी दूयते क्लेशं प्राप्नोति। किंभूता पक्षिकंधरा। पक्षिणि स्वपक्षपातिनि मयि कंधरा मन्या यस्याः सा तां इह मत्स्थाने न क्षिपसि वा न मुञ्चसि वा। तर्हि सङ्ग्रामेण मोचयिष्यामीति तात्पर्यार्थः॥ कृष्णपक्षे—कंसवधे कृते उद्धवाक्रूरादयः कृष्णं स्तुवन्ति—भो यदूत्तमतम, स्वनीलिमाराधकं स्वस्य नीलिमा तं आराधयतीति स्वनीलिमाराधकं पुरुषं ते पक्षिवाहने क्षिपसि। यदुषु उत्तमतम श्रेष्ठतम त्वदनुस्मृतिं कुर्वाणं पुरुषं ते पक्षिवाहने गरुडः तस्मिन् क्षिपसि आरोहयसि।

गरुडारूढं कृत्वा वैकुण्ठं प्रति नयसीत्यर्थः । एवमपरोक्षभावनया एतत्फलं कंसस्य श्रीमत्साक्षात्कारे प्रवृत्तस्य मुक्तिरित्यत्र किं चित्रमित्यर्थः ॥

ततो जटायुवचनाज्जानकीशुद्धिं लब्ध्वापि दक्षिणतश्चलितस्य रामस्यावस्थामाह—

वनान्तयानस्वणुवेदनासु योषामृतेऽरण्यगताविरोधी ।
धीरोऽविताऽगण्यरते मृषा यो सुनादवेणुस्वनयातनां वः ॥ २४ ॥

स रामः योषामृते वनान्तयानस्वणुवेदनासु अरण्यगताविरोधी अभूत् । योषां जानकीं विना वनान्तेषु यानं परिभ्रमणं तत्र महाक्लेशप्राप्तावपि सुतरामणुवेदनासु । विवेकेन लक्ष्मणकृतेन सान्त्वनेन च ईषत्क्लेशेषु जातेषु सत्सु अरण्यगताः वानराः आविरोधिनो मित्राणि वयस्याः यस्य स्त्रीवेदनासूद्भूतासु सतीषु वानरैः सह सख्यं यज्जातं तेन विश्रान्तिरभूदित्यर्थः ॥ कृष्णपक्षे—कृष्णे विहाय गोकुलं मथुरां गते सति विरहखिन्ना गोप्यो मिथः प्रोचुरित्याह—अगण्यरते धीरः वः अविता इति । मृषा गणयितुं संभावयितुं योग्यं गण्यं न गण्यं अगण्यं अश्लाघ्यं कुब्जया सह रतं तत्र धीरः निर्लज्जत्वेन प्रवृत्तः कृष्णः वः अविता पुनर्गोकुलमागत्य रक्षिष्यतीति मृषा असत्यं तत्कुतः सुनादवेणुस्वनयातनां किं न स्मरतीत्यध्याहारः । सुष्ठु नादो यस्यासौ सुनादः एतादृशः वेणुस्तस्य स्वनस्तेन कृतां यातनां दूराद्वेणुस्वनमाकर्ण्य यावत्कृष्णदर्शनं तावत्पर्यन्तं या यातनाविरहदुःखमस्माकं किं पुनस्तस्मिन् परदेशं गते सतीति किं न स्मरतीत्यर्थः ॥

अथ पूर्वश्लोके अणुवेदनास्विति पदेन महति दुःखे सति कथं विश्रान्तिरित्याह—

किं नु तोयरसा पम्पा न सेवा नियतेन वै ।
वैनतेयनिवासेन पापं सारयतो नु किम् ॥ २५ ॥

पम्पा तोये रसः स्वादुता यस्याः सा तोयरसा एवंविधा पम्पा किं नास्ति। अस्त्येवेत्यर्थः। तथा—वै इति निश्चयेन । नित्यनियतेनता हनुमता सेवा किं नास्ति। अस्त्येव। एवमुभयथापि रामस्य विश्रान्तिर्विरहदुःखेऽप्यासीदित्यर्थः॥ कृष्णपक्षे—गोप्यः उद्धवं परिहसन्ति—वैनतेयनिवासेन गरुडनिवासेन कृत्वा पापं सारयतो दूरीकुर्वतः पुरुषस्य किं नु वाच्यमित्यध्याहारः । कृष्णोपासनया निष्पापस्त्वं कथमस्मान्प्रतारयसीति सूचितम् ॥

अथ वालिना हृतदारः सुग्रीवो रामं शरणं प्रयात इत्याह—

स न तातपहा तेने स्वं शेनाविहितागसम् ।
संगताहिविनाशे स्वं नेतेहाप ततान सः ॥ २६ ॥

स न तातपहा रामः शेन स्वं तेने न तस्य नम्रस्य शरणं गतस्य आतपं संतापं हन्तीति तथाविधो रामः शेन सुखेन स्वं तेने । आश्वासजनितसुखेन स्वं स्वकीयं सुग्रीवं तेने विस्तारितवान् । न विहितं न संपादितम् आगः अपराधो येन तथा । निरपराधत्वेनाविहितागसमिति सूचितमित्यर्थः ॥ कृष्णपक्षे—उद्धवः गोपिकां प्रति कृष्णस्याश्रितपक्षपातं वदति—स नेता नियन्ता कृष्णः इह सरस्वतीरसं स्थानं नन्दं संकटके आप प्राप

तथा संगताहिविनाशे स्वं जनं ततान । संगतः प्राप्तः यो अहिः सर्पस्तस्य विनाशे कृते सति स्वकीयं जनं गोकुलस्थितं ततान विस्तारयामास । नन्दं निधनशङ्कया मुमूर्षु विस्तारितवान् स किं भवतीत्युपेक्षत इति सूचितम् ॥

अथ वालिनं हत्वा सुग्रीवपत्नीं मुमोचेत्याह—

कपितालविभागेन योषादोऽनुनयेन सः ।
स नये न नु दोषायो नगे भाविलतापिकः ॥ २७ ॥

स रामः अनुनयेन प्रीत्या कापितालविभागेन योषादोऽभूत् । कपिर्वाली तालाश्च तद्रक्षकास्तेषां विभागेन विच्छेदेन योषां ददातीति योषादः योषां सुग्रीवपत्नीं दत्तवान् ॥ कृष्णपक्षे—गोपिका वदन्ति—स कृष्णः नये नीतिमार्गे नास्ति । नु इति वितर्के । किंतु दोषायोऽस्ति । दोषाणां दुःखानां आयः प्राप्तिर्यस्मात्स तथा । पुनरायास्यतीति चेन्न । कुतः । यथा नगे भाविलतापिकः नगे पर्वते भाविनी या लता वल्ली सहकारशाखा तत्र पिकः पिकतुल्यः । यथा यमसंभावितार्थः तद्वदित्यर्थः ॥

अथ वालीपुत्रः अङ्गदो रामं प्रति वदति—

ते सभा प्रकपिवर्णमालिका नाल्पकप्रसरमभ्रकल्पिता ।
तालिपकभ्रमरसप्रकल्पना कालिमार्णव पिक प्रभासते ॥ २८ ॥

भो राम, ते सभा प्रकपिवर्णमालिकास्ति । प्रकृष्टा ये कपयो वानरास्तेषां ये विचित्रवर्णास्तेषां माला यस्यां सा तथा नानाविधवानरश्रेणीसंपन्ना । सा तु अल्पकप्रसरं यथा भवति तथा अल्पसंख्याका परंतु अभ्रकल्पिता नास्ति । अभ्रे आकाशे मेघमण्डलपर्यन्तं वा नास्ति । अनेन रक्षःपङ्क्तिः आकाशे प्रकल्पितास्तीत्यर्थः ॥ कृष्णपक्षे—गोपिकास्तावदन्योपदेशेन पिकं प्रति वदन्ति—भोः कालिमार्णव मालिन्यसमुद्र पिक कोकिल, त्वयि तालिपकभ्रमरसप्रकल्पना प्रभासते । तल्पे भवं तालिपकं सुरतं तस्य भ्रमरस्तत्र यो रसः स प्रभासते स्वप्ने सुरतभ्रमे यावान् रसः स एव त्वयि भासते । न साक्षादस्मत्सुरतसुखं तत्तु तव स्वप्नेऽपि दुर्लभमित्यर्थः ॥

अथ रावणो यद्यपि सकलसैन्यसन्नाहवानस्ति तथापि तत्र वीरलक्षणं नास्तीत्याह—

रावणेऽक्षिपतनत्रपानते नाल्पकभ्रमणमक्रमातुरम् ।
रन्तुमाक्रमणमभ्रकल्पना तेन पात्रनतपक्षिणे वरा ॥ २९ ॥

रावणे अक्रमातुरं यथा भवति तथा अक्षिपतनत्रपानते सति अल्पकभ्रमणं न भविष्यति न क्रमः अक्रमः परस्त्रीहरणादिकस्तेन आतुरं यथा स्यात्तथा अक्षिपतनं रामस्य दृष्टिपातस्तेन या त्रपा लज्जा तया रावणे नम्रे सति पर्याकुलतया यत् भ्रमणं चित्तभ्रमः किं न भविष्यति । भूयादेव । अहो वीरव्रतमतिक्रम्य पापं कृतवतो मम जयो नास्त्येवेति लज्जया कृत्वा चित्तस्यैव किं त्रासो न भविष्यतीत्यर्थः ॥ कृष्णपक्षे—उद्धवो गोपिकाः प्रति वदति—भो गोप्यः, तेन आक्रमणं दैत्यनिबर्हणादिकं तथा अभ्रवत्कल्पना मेघ-

श्यामता च रन्तुं क्रीडार्थमवलम्बिता तत्स्थानेऽनेन तस्य न किमपि प्रयोजनं तत्र तेन कारणेन सा मेघश्यामता पात्रनतपक्षिणे वरा पात्रे नताः पात्रनताः पुरुषास्तेषां पक्षो यस्य स तत्पक्षी तस्मै कृष्णाय वरा कल्पिता। भक्तानां ध्यानगोचरत्वायेत्यर्थः । तथा च भवतीनां ध्यानयोगेनैव कृतार्थत्वमस्तीति सूचितम् ॥

अथ सीताशुद्ध्यर्थमादिष्टो हनुमान् रामं प्रति विद्युन्मालयाह—

दैवे योगे सेवादानं शङ्का नाये लङ्कायाने ।
नेयाकालं येनाकाशं नन्दावासे गेयो वेदैः ॥ ३० ॥

अये श्रीराम, लङ्कायाने लङ्कां प्रति गमने शङ्का नास्ति । कुतः । यतो दैवे योगे सेवादानं जातमस्ति । देवसंबन्धी दैवस्तस्मिन् तव योगे या सेवावलम्बितास्ति । अतो लङ्कागमने त्वत्सेवाया एव सामर्थ्यमित्यर्थः ॥ कृष्णपक्षे—पुनरुद्धवः कृष्णं स्तौति—स कृष्णः नन्दावासे नन्दव्रजेऽभूत्। स कः। येन आकाशं नेयाकालं नेतुं संहर्तुं योग्यो नेयः आसमन्तात् कलयति तत् एवंविधमाकाशं काले आकाशादिकमपि संहर्तुं क्षमः। तत्रभवतीनां सारः श्रमः कियानित्यर्थः। किंभूतः। वेदैः गेयः गातुं योग्यः ॥

अथ जानकीशुद्धिं कृत्वा परावृत्तो हनुमान् रामं प्रति वदतीति समाक्षरया शालिन्याह—

शङ्कावज्ञानुत्त्वनुज्ञावकाशं याने नद्यामुग्रमुद्याननेया ।
याने नद्यामुग्रमुद्याननेया शङ्कावज्ञानुत्त्वनुज्ञावकाशम् ॥ ३१ ॥

हे राम, सा जानकी उग्रमतिक्लेशं यथा भवति तथा नद्यां कुल्यायां उद्याने नेया उद्याने क्रीडावने नेतुं योग्या नेया अस्ति। तथा सीता कृत्रिमसरिदुपकण्ठे उद्यानेऽस्तीत्युक्तम् । इत्थं त्वं रावणस्य क्रीडावनं गन्तुं कथमवकाशं लब्धवानित्याह—याने प्रयाणकाले अनुज्ञावकाशं यथा भवति तथा शङ्कावज्ञानुत् तु श्रीमदनुज्ञालब्धावकाशत्वेन शङ्कावज्ञे नुदिते । तथा शङ्का राक्षसभयं तत्कृतावज्ञा जम्बूवनपालादिकृता। तदुभयं मया निराकृतमित्यर्थः ॥ कृष्णपक्षे—गोकुलात्परावृत्त उद्धवः कृष्णं प्रति वदति—भोः कृष्ण, उद्याननेया कापि गोपिका नद्यां याने उग्रं अतिक्लेशं यथा भवति तथा तिष्ठति। या त्वया पूर्वं स्कन्धोपरि धृत्वा उद्यानं प्रति प्रापिता तर्हि तस्या दयितदेवरादयः किं न सन्तीत्याह—हे कृष्ण, सा गोपिका अहं पुनरागमिष्यामीति श्रीमदनुज्ञया लब्धावकाशं यथा स्यात्तथा शङ्कावज्ञा सती तिष्ठति । शङ्काया दयितभयं तस्य अवज्ञा अवगणना यस्याः सा दयितदेवरादीनां शङ्काभयं तथा तत्कृतविकाराद्यविगणय्य प्राणावशेषा तिष्ठति। एवं तयैकया विनान्याः सर्वा अपि मया संबोधिता इत्युक्तं भवति ॥

अथ समुद्रं नियम्य लङ्कां गन्तुं शक्तोऽपि रामः क्षुद्रवानरकौतुकं द्रष्टुं सेतुबन्धार्थमादिदेशेत्याह—

वा दिदेश द्विसीतायं यं पाथोयनसेतवे ।
वेतसेन यथोपायं यन्तासीद्विशदे दिवा ॥ ३२ ॥

वेति अथवा स रामः यं कंचिद्वानरं पाथोयनसेतवे दिदेश । पाथसामुदकानामयनं यस्मिन् पाथोयनः समुद्रस्तस्य सेतवे सेतुबन्धायादिदेश आज्ञापयामास । किमर्थं परम् । द्विसीतायं यथा स्यात्तथा । द्वयोः सीतयोः समाहारो द्विसीतं तस्यायः प्राप्तिः । किं पुनरेकसीतालब्धिः । अपरं सेतुबन्धाख्यं पुरुषार्थं सीताद्वयलाभो भविष्यतीत्युत्साहेनादिदेशेत्यर्थः ॥ कृष्णपक्षे—कंसे हते मातामहायोग्रसेनाय राज्यं दत्त्वा स्वयं तत्सैन्यपतिर्बभूवेत्याह—स कृष्णः यथोपायं वेतसेन यन्तासीत् । यथोपायं राजनीतिमनतिक्रम्य वेतसेन वेत्रधारत्वेन नियन्तासीत् विशदे दिवा सुमुहूर्तोपलक्षिते दिवा दिवसे ॥

अथ राक्षसैः सह संग्रामोपस्थितः श्रीरामो हनुमत्प्रशंसामाह—

वायुजोऽनुमतो नेमे संग्रामेऽरवितोऽह्नि वः ।
वह्नितो विरमे ग्रासं मेनेऽतोऽमनुजो युवा ॥ ३३ ॥

हे वानराः, वः इति युष्माकं मध्ये अरवितः अह्नि वा संग्रामे उपस्थिते सति वायुजोऽनुमतः अस्ति । न रविर्यस्मिंस्तत् अरवि तस्मिन् । रात्रावित्यर्थः । वा अह्नि दिवा वासंग्रामे उपस्थिते सति हनुमानेव अनुमतः संमतः । रात्रौ दिवा वा मायाविभिः सह संग्रामे वायुपुत्र एव निर्वाहयिष्यतीत्युक्तं भवति । इमे सर्वे वानराः नानुमताः न संमताः ॥ कृष्णपक्षे—कंसादिहनने राज्यस्थापने वा कृष्णस्य किं चित्रं वर्णनीयमित्याह—अतः परं यः विरमे प्राप्ते सति वह्नितः वह्निमेव ग्रासं भक्षत्वेनोपस्थितं मेने । अमनुजः देवः सन् युवा पराक्रमी । तत्र न किमपि चित्रमित्यर्थः ॥

अथ रामरावणयोर्युद्धप्रसङ्गे वानरैर्व्याकुलितो रावणो रामेण सह न प्रभावमगादित्याह—

क्षताय मा यत्र रघोरितायुरङ्कानुगानन्यवयोऽयनानि ।
निनाय यो वन्यनगानुकारं युतारिघोरत्रयमायताक्षः ॥ ३४ ॥

यत्र अङ्कानुगानन्यवयोऽयनानि सन्ति तत्र इतायुः रघोः क्षताय माभूत् । अङ्कं अनुगच्छन्ति ते अङ्कानुगाः शरणं गता वानरास्तेष्वनन्यं वयः जन्म येषां ते अनन्यवयसः सुग्रीवहनुमदादयस्तेषां अयनानि संग्रामे व्यूहप्रवेशपरिसरणानि यत्र तत्र इतायुर्दशास्यः रघोः रामचन्द्रस्य क्षताय शस्त्रादिभिर्घाताय मानसमर्थोऽभूत् । प्रथमतो वानरैरेव व्याकुलीकृतः रामेण सह योद्धुमलब्धावकाशोऽभूदित्यर्थः ॥ कृष्णपक्षे—वृन्दावने कृष्णो दैत्यानवधीदित्युक्तम् । तत्र त्रयमतिभयानकं हतमित्याह—यः आयताक्षः कृष्णः युतारिघोरत्रयं मुक्तिं निनाय । युतः योगं प्राप्ताश्च ते अरयश्च तेषु घोरत्रयं निनाय प्रापितवान् । पूतना अघासुरः केशी चेति भयानकं त्रयं स्वान्तिके प्रापितमित्यर्थः । अथ भयानकमेव व्यनक्ति—किंभूतं घोरत्रयम् । वन्यनगानुकारं वने स्थितः वन्यः स चासौ नगः पर्वतस्तद्वदनुकारो यस्य सः । तथा अतिप्रचण्डमित्यर्थः ॥

अथ सपरिवारस्य रावणस्य तारके परब्रह्मणि प्रवेशोऽभूदित्याह—

तारके रिपुराप श्रीरुचा दाससुतान्वितः ।
तन्वितासु सदाचारु श्रीपरा पुरि के रता ॥ ३५ ॥

रिपुः श्रीरुचा तारके आप रिपुः रावणः श्रीर्मोक्षलक्ष्मीः तस्याः रुग्दीप्तिः प्रकाशस्तेनेत्यर्थः । किंभूतः । दाससुतान्वितः । दासाश्च कुम्भकर्णादयः सुता इन्द्रजिदादयस्ते सर्वेऽपि तारकं प्राप्ता इत्यर्थः ॥ कृष्णपक्षे—सदा चारु यथा स्यात्तथा तन्वितासु गोपीषु श्रीपरा पुरि के रता आसीत् । तनुना शरीरेण इतासु प्राप्तासु गोपिकासु मध्ये श्रियः लक्ष्म्याः परा श्रीपरा द्वितीयलक्ष्मीरिव सैरन्ध्रीपुरि मथुरायां के परब्रह्मणि कृष्णे रतासीत् । गोकुले कृष्णविरहेण तदा ध्याननीतासु सतीषु मथुरायां कृष्णस्य सैरन्ध्र्या साकं गार्हस्थ्यमभूदित्यर्थः ॥

अथ रावणे सपरिवारे हते सति लङ्का हतप्रभाभूदिति विद्युन्मालयाह—

लङ्का रङ्कागाराध्यासं याने मेया काराव्यासे ।
सेव्या राका यामे नेया संध्यारागाकारं कालम् ॥ ३६ ॥

याने रामागमने सति लङ्का रङ्कागाराध्यासं यथा स्यात्तथा मेयाभूत् । लङ्का नगरी रङ्कस्यागारं रङ्कागारं तस्य अध्यासो भ्रमस्तेन ज्ञातुं योग्याभूत् । इयं लङ्का तु कस्यचिद्रङ्कस्य अगारमिति भ्रमेण ज्ञाताभूदित्यर्थः । कस्मिन्सति । काराव्यासे सति कारा बन्दीगेहं तस्य अव्यासे अविस्तारे सति । कारा विस्तारं निर्भिद्य बन्दीभूतेषु देवेषु । निर्मोचितेषु सत्स्वित्यर्थः ॥ कृष्णपक्षे—पूर्वं सैरन्ध्र्या साकं कृष्णस्य गार्हस्थ्यमभूत्तत्र दृष्टान्तमाह—सेव्या सेवितुं योग्या सेव्या अतिरमणीयमभूदित्युक्तम् । सैरन्ध्री यामे संयोगावसरे कालं मेघश्यामं कृष्णं प्रति नेया नेतुं योग्या नेयाभूत् । अन्वयोग्यपदेनोभयोः संयोगे शोभातिशयः सूचितः । काकमिव राका संध्यारागाकारमिव पूर्णचन्द्रोदयोपलक्षिता राका संध्यारागाकारं प्राप्य यथा शोभातिशयशालिनी भवति तद्वदित्यर्थः ॥

गोदावरीब्रह्मगिरेः सकाशात्संप्रापिता प्रागुदधिं प्रयत्नात् ।
येनर्षिणा सोऽपि पुनः प्रतीपमानेतुमद्रिं प्रभवेत्किमेताम् ॥

एवं विलोमाक्षरकाव्यकर्तुर्भूयांसमायासमवेक्ष्य तज्ज्ञाः ।
जानन्त्विमां चित्रकवित्वसीमां दैवज्ञसूर्याभिधसंप्रदिष्टाम् ॥

इति श्रीदैवज्ञपण्डितसूर्यकविविरचितं विलोमाक्षररामकृष्णकाव्यं समाप्तम् ।

---

# KÂVYAMÂLÂ.

A collection of old and rare Sanskṛit Kâvyas, Nâṭakas, Champûs, Bhâṇas, Prahasanas, Chhandas, Alankâras &c.

## PART XII.

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1897.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## द्वादशो गुच्छकः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८९७

(अस्य ग्रन्थस्य पुनर्मुद्रणादिविषये सर्वथा निर्णयसागरमुद्रायन्त्रालयाधिपते-
रेवाधिकारः ।)

मूल्यमेको रूप्यकः ।

# अनुक्रमणिका ।







# काव्यमाला।

श्रीरामभद्रदीक्षितविरचितो

## रामचापस्तवः।

यन्मूले रघुनन्दनस्य जगतां त्रातेति कीर्त्यङ्कुरो
देवी चार्चति जानकी सविनयं यद्गन्धपुष्पाक्षतैः।
यत्कोट्या कृतलाञ्छनश्च जलधौ सेतुर्जगत्पावनो
भद्रायास्तु जगत्त्रयस्तुतिपदं तद्राघवीयं धनुः॥ १॥
यः शत्रुंजयकुञ्जरेश्वरशिरःसंघट्टनाकर्कशे
वैदेहीकुचकुम्भपत्रमकरीविन्यासवैज्ञानिके।
चञ्चत्पञ्चवटीकुटीरजटिलव्यूहाय दत्ताभये
पाणौ कौणपवैरिणो विजयते चापाय तस्मै नमः॥ २॥
दारुण्यप्यवलम्बिते कृतवतः साकेतराज्यश्रियं
केलिन्यासविधूतगौतमवधूदुःशीलमूलैनसः।
पादस्याक्रमणेन पूतमसकृत्कोटौ गुणारोपणे
चापं चन्द्रवतंसचापमथितुर्देवस्य सेवामहे॥ ३॥
मद्रक्षाकथनेच्छयेव गतया देवस्य कर्णान्तिकं
मौर्व्या मार्गणपक्षपातघटनापारीणया संगतम्।
कोटौ चामरहेमभूषणमिषात्कीर्तिप्रतापाङ्कुरौ
बिभ्राणं करवाणि रावणरिपोश्चापं शरण्यं प्रभोः॥ ४॥
लब्धोन्मेषविशेषभीषणशिखिज्वालाजटालेक्षण-
श्लिष्टाभ्यन्तररुष्टरुद्रनिटिलस्निग्धं विशुद्ध्यै गिराम्।
अन्तः संततकाञ्चनाञ्चितशरश्रीमञ्जरीपिञ्जरी-
भूतं भातु पुरः कबन्धमथितुर्ज्याबन्धवामं धनुः॥ ५॥

कल्याणं वितनोतु नः करुणया काकुत्स्थचूडामणे-
श्चापः कोपदुरापरुद्रविकटभ्रूवल्लरीविभ्रमः।
यत्रोद्घाटितनैटिलेक्षणपुटप्रोद्दामधूमध्वज-
ज्वालावल्लिविडम्बडम्बरमयत्यापिञ्जरा शिञ्जिनी॥ ६॥
कर्षद्दक्षिणपाणिलग्नसशरज्यावल्लिचक्रीकृतं
गृह्णद्वामकराङ्गुलीयकमणिच्छायोल्लसल्लस्तकम्[1]।
संरब्धस्य निषेदुषो रघुपतेरालीढभङ्ग्या[2] रणे
धावद्राक्षससैनिकाक्षिविषयं क्षेमाय चापं भजे॥ ७॥
भास्वच्चन्द्रकलाग्रमाशरकुलासृग्लोहिताङ्गं बुध-
ध्येयं चित्रशिखण्डजातघटितं वाल्मीकिकाव्यस्तुतम्।
मन्दस्यापि मतिप्रदं प्रणमतो बाणं रणे बिभ्रते
श्रीरामस्य शरासनाय शिरसि न्यस्ये नमस्याञ्जलिम्॥ ८॥
भद्रं यच्छति पापमत्ति भणितिं दत्ते यशः पुष्यति
प्रागल्भ्यं विवृणोति तस्य नुवति स्वं यो नरः सूक्तिभिः।
यो देवान्विरुणद्धि विप्रकुरुते विप्रान्निगृह्णाति तं
चापं दाशरथेरिति श्रुतवता संसेव्यते तन्मया॥ ९॥
आस्तामिन्द्रयमादिदिक्पतिकुलं तिष्ठन्तु देवास्त्रयो
देवो वा रघुनन्दनो विहरतु स्वैरं समं सीतया।
अस्माकं तु शरण्यमस्ति परमं तत्किंचन प्राणिनां
कोटिस्पृष्टपयोधिसेतुसलिलैरेनः पुनानं धनुः॥ १०॥
अन्ये केलिगृहीतकालियफणारङ्गस्थलीनर्तन-
क्रीडामर्दलवाद्यहृद्ययमुनाकल्लोलकोलाहले।
देवे प्रेम वहन्त्वहं तु कुतुकी काकुत्स्थहस्तद्वयी-
रङ्गोत्सङ्गनटे धनुष्यरिभटाक्रन्दोरुभेरीरवे॥ ११॥
कालव्यालकपालजालघटितस्रग्भारघोरं परे
रुद्रं भद्रतृषाविषादकृतधीलोपा वृथोपासताम्।

१. धनुर्मध्यम्. २. अवस्थानविशेषः.

श्रीमच्चामरबद्धमृद्धसुषुमज्यावल्लिकावेल्लितं
दध्यां बुद्धिमहं तु राक्षसचमूहन्तुः प्रणन्तुं धनुः ॥ १२ ॥
धावंधावमबन्धगन्धगजवद्विन्ध्याद्रिवन्ध्याटवी-
कल्पेऽप्यत्र जगत्त्रये सर इव स्नातुं ममेदं मनः ।
नन्वन्विष्यति धन्व मन्वभिजनोत्तंसस्य हंसच्छद-
स्वच्छोद्यच्छदभीशुपेशलशिरोबद्धोच्चलच्चामरम् ॥ १३ ॥
धर्मं निर्मलमाप्नुयामिति तथा विन्देय मन्देतरा-
नर्थानित्यहमत्यये दिवि वधूर्भुञ्जीय मञ्जूरिति ।
ब्रह्मानन्दविधायिनीर्मम पुनः प्रामाण्यवाचामपि
ध्यातव्ये रघुनन्दनस्य धनुषि त्रेधा मनो धावति ॥ १४ ॥
नाहं यष्टुमलं भवामि न घटे दातुं धनान्यर्थिनां
का शक्तिर्मम दृश्यते तपसितुं दुर्निग्रहे मानसे ।
आत्मज्ञानमवाप्नुयामिति तथाप्याराधयेयं गिरा
वाराशिस्मयघस्मरास्त्रमहसो वीरस्य सारं धनुः ॥ १५ ॥
मातुर्गर्भकुटीरमर्भकतनुः संप्राप्य कं प्रायशो
नो जन्मानि कियन्त्यगाहिषि कियद्दुःखं च नाज्ञासिषम् ।
दिष्ट्या संप्रति जायते मम नृणां जन्मात्ययध्वंसने
चापे चन्द्रवतंसचापमथितुर्देवस्य भावः स्थिरः ॥ १६ ॥
वल्गन्मन्दरशैलमूलमुखरक्षीरोदपूरोदर-
क्षिप्तानर्गलनिर्गलन्नवसुधामाधुर्यधुर्या गिरः ।
निर्गच्छन्तु निसर्गवेगविधुतस्वर्लोककल्लोलिनी-
गर्वाः शर्वधनुर्विमर्दनधनुःस्तोत्राय वक्त्रान्मम ॥ १७ ॥
कालोन्मीलदमन्दकुन्दमुकुलस्पर्धानिबद्धादर-
प्रौढोदारपरप्रबन्धरचनापाण्डित्यनाडिंधमम् ।
अस्तु प्रस्तुतदुर्घटस्वमहिमस्तोत्रस्य मे त्रस्यतः
खेदच्छेदकृतादरं भगवतश्चापं रुचा बन्धुरम् ॥ १८ ॥

गौरीतातगिरीशमञ्जुलदरीकेलीधुरीणामरी-
वीणोरीकृतवैखरीमधुझरीपारीणरीतिक्रमम् ।
मारीचारिधनुः सरीसृपपुरीनारीजनैरीडितं
सारीकृत्य सरीसरीतु हृदि मे भूरीर्वचोमञ्जरीः ॥ १९ ॥

चित्रस्वीयचरित्रचिन्तनसुधाकृष्टाय तुष्टूषवे
मह्यं स्निह्यतु दातुमुक्तिमवनीपुत्रीशमित्रं धनुः ।
श्लाघान्दोलितचन्द्रचूडमकुटीविभ्राम्यदभ्रापगा-
पाथःपातगृहीतगर्वगिरिजानेत्रान्तपात्रीकृताम् ॥ २० ॥

पापार्थस्मरणेन जातु जनितं पापं कृपापक्ष्मलो
गौरीकान्तशरासनान्तकधनुर्दूरीकरोतु [द्रुतम्] ।
नैवं चेत्कथमेष भीषणदवज्वालाकरालाटवी-
विक्राम्यद्भवचक्रनिग्रहविधौ प्रागल्भ्यमभ्येतु मे ॥ २१ ॥

शस्त्राचार्यभुजंगभूषणधनुर्भङ्गप्रसङ्गश्रव-
प्रादुर्भूतरुषः कराद्भृगुपतेर्यद्गृह्णति प्रेयसि ।
ईर्ष्यारोषकषायिता दरदलत्कह्लारगर्भश्रियो
जानक्या निहिता दृशो हृदि वयं तत्कार्मुकं कुर्महे ॥ २२ ॥

सङ्घीभूय कुतूहलेन गगने स्थित्वा मुहुः पश्यतां
संतानद्रुमपुष्पवृष्टय इव स्वर्गौकसां दृष्टयः ।
यत्र क्षत्रियकण्ठलावपरशोर्वीरादुपात्तेऽपत-
न्कुर्यामुत्तरकोसलेन्द्रधनुषे तस्मै प्रणामाञ्जलिम् ॥ २३ ॥

हेलाकालमुहुर्गृहीतकमलाचेलान्तदृश्यस्तन-
श्रीखण्डद्रवमुद्रिताच्युतकरस्पर्शस्फुरत्सौरभम् ।
शश्वद्दुष्प्रतिलम्भसंभवमनःशर्मण्यधर्मे मम
प्रावण्यं प्रणुदेद्विदेहतनयाप्राणेशबाणासनम् ॥ २४ ॥

त्रासोद्भ्रान्तशकुन्तसंततिजवव्याधूतचूताटवी-
शाखाशेखरमञ्जरीपरिगलन्माध्वीनिषिक्ताध्वनि ।

गोदावर्युपकण्ठसीम्नि कुहनागोकर्णहत्त्यै गुणं
यस्यारीरणदीश्वरो रघुभुवां तद्धन्व मन्ये गतिम् ॥ २५ ॥

पश्चात्पश्यति बाणपातचकिते शश्वन्निवृत्त्याननं
विद्राणे कुहनामृगे विकिरितुं बाणो यदारोपितः ।
देवेन श्रवणान्तकृष्टकपिलज्यावल्लि तत्कार्मुकं
केकागर्भितकण्ठकाननशिखिप्रेक्षापदं पातु नः ॥ २६ ॥

वेगभ्रंशितवृक्षनीडविहगव्यागीर्णविद्रावित-
क्रीडद्द्रोहितपङ्क्ति दर्भकवलव्यावृत्तमत्तद्विपम् ।
द्रागुत्थापितसुप्तकेसरि जनस्थाने खरायोधने
ज्याघोषं जहति प्रभोर्धनुषि मे चेतो मुहुर्धावति ॥ २७ ॥

वीर्योत्सिक्तखरप्रयुक्तसमरप्रक्रान्तचक्रभ्रमी-
चञ्चत्काञ्चनपञ्जरोदरचरश्रीरामकीरार्भके ।
धावत्येव मनो विनोदरसिकं दिक्षु प्रविक्षिप्तया
विष्वग्घट्टितहेमपट्टकपिशे चापे रुचा पेशले ॥ २८ ॥

त्रासोल्लासविलोललोचननदीपर्यन्तनिर्यन्मृगी-
घासग्रासनिरासशासनगिरा ज्यागर्जितेनोर्जिते ।
कीशाधीशविनाशसाशयशरव्यामोक्षभीमोद्यमे
श्रीमद्रामशरासने सरति मे भद्राय भद्रा मतिः ॥ २९ ॥

तद्दिग्भागनिविष्टदृष्टिमचिरव्यापन्नदोर्विक्रमं
चेतःस्फीतभयप्ररोहमुदितप्रत्यङ्गरोमोद्गमम् ।
उद्यद्गद्गदकण्ठनादमुरसि द्राङ्न्यस्ततीक्ष्णाशुगं
कुर्वद्वालिनमाहवे भगवता कृष्टज्यमीडे धनुः ॥ ३० ॥

चञ्चच्चामरदामरश्मिहसितैर्व्याक्षोदरौदन्वत-
त्वङ्गत्तुङ्गतरङ्गगर्वगरिमप्रध्वंससंसूचनम् ।
कोदण्डं कलिखण्डनाय कलये रामस्य भीमस्य त-
त्क्षिप्तोद्दीप्तशराग्रजाग्रदनलज्वालाकरालाम्बरम् ॥ ३१ ॥

यन्मौर्व्यामिषुमोचनाय जलधावास्फालितायां प्रभो-
रङ्गुल्या चिरकालविस्मृतमहीकन्याकुचस्पर्शया ।
टङ्कारो निरुणद्धि कर्णविवराण्यन्यानि दिग्दन्तिनां
शुण्डादण्डमुखेन गाढपिहितात्तन्मे शरण्यं धनुः ॥ ३२ ॥

वेलाशैलगुहाविहारिवनकर्यादानमोदाकुल-
क्रामद्भीमविलासकेसरिमुखव्याकर्षणैकक्षमम् ।
तारज्यारवमुद्भमद्रचयितुं भव्यं शरव्यं पयो-
राशिं मे शिवलम्भकं भवतु तद्देवस्य तावद्धनुः ॥ ३३ ॥

कालीयानकरालकण्ठनिनदन्यक्कारलीलासख-
ज्याकर्षस्तनितात्तगन्धचकितक्रन्दद्दिशादन्तिनि ।
गर्जन्निर्झरिणीशतर्जनदशानिर्यच्छरे धीरियं
सीताकान्तकरान्तकेलिसदने काण्डासने खेलति ॥ ३४ ॥

पारावारतटीकुटीरविटपिस्त्यायत्कुलायस्थित-
श्येनोड्डीनविधानकेलिरसिकज्याघोषणाघोरया ।
वारिप्रेरितसायकायतशिखाचक्रत्रुटन्नक्रया
भास्वद्वंशवतंसचापलतया नूनं मनो नन्दति ॥ ३५ ॥

वन्दे कार्मुकमीशकार्मुकभिदो वीरस्य यस्मिन्रुषा
कल्पान्तानलकल्पमब्धिहतये बाणाग्निमुन्मुञ्चति ।
कन्थादाहधिया करेण ममृशे चूडानदी शंभुना
पीठप्लोषविशङ्किना च विधिना स्पृष्टा पयःकुण्डिका ॥ ३६ ॥

ज्यामौखर्यविदार्यमाणनदराट्पर्यन्तगिर्यन्तरं
स्थैर्यौदार्यनिवार्यमेरुमदमर्त्यैश्वर्यकार्यर्थिनाम् ।
पर्यन्तार्णववार्यजीर्यदिषुचर्याश्चर्यधुर्यं नम-
स्कुर्यामर्यमवंशजार्यकरयोः पर्यायधार्यं धनुः ॥ ३७ ॥

ज्याविद्धेषुसमिद्धपावकशिखासंनद्धगाढोद्धत-
क्रीडद्वाडवपीडनाचटचटाकुर्वाणसर्वाण्डजात् ।

अब्धेर्लब्धतरङ्गमङ्गलमृदङ्गारावधारावता-
त्सीतावल्लभचापवल्लिरुदयल्लीलामतल्लीसखी ॥ ३८ ॥
मौर्वीविद्धशराग्निदग्धकमठीपाठीनगाढोल्लुठ-
त्कल्लोलोद्भटपूरपूरणरणत्पर्यन्तगिर्यन्तरे ।
अप्राप्तप्रतिबिम्बडम्बरवपुःसिन्धौ कबन्धद्विषः
कोदण्डं गुणमण्डितं मम शुचः स्यात्खण्डने पण्डितम् ॥ ३९ ॥
ज्याविक्षिप्तपृषत्कवल्गदनलक्काथोद्भवद्बुद्बुद-
क्षारक्षीरधिपाचिताचिततिमिक्रव्यग्रहव्यग्रया ।
त्रासत्यक्तनिवासमब्धिजठराद्दूरे वधूरेखया
साकं कैकसलोकमाकलितवद्देवस्य सेवे धनुः ॥ ४० ॥
लङ्कातङ्कविशङ्किशंकरगिरिप्रक्षोभिरक्षोऽभितो-
निक्षिप्ताप्तनिशाटपाटनपटुस्फोटप्लवङ्गच्छटे ।
विष्वग्विष्वणदिष्वरिष्ववतरज्जन्ये रजन्येधिते
मन्ये धन्व शमन्ययाय(?) हृदये मान्यस्य धन्विप्रभोः ॥ ४१ ॥
नन्दन्निर्जरवृन्दमुक्तकुसुमैः सुग्रीवविग्रीकृत-
प्रक्रान्ताहवकुम्भकर्णदुरवापामन्दगन्धग्रहैः ।
सामोदं मनसा मनूद्वहधनुर्ज्याटंक्रियान्धोरग-
द्वन्द्वान्योन्यदुरीक्षकेलिविरसाधोलोकमालोकये ॥ ४२ ॥
सक्रोधप्लवगाग्रणीनखरदश्रेणीनिकृत्तश्रवो-
नासत्रासदकुम्भकर्णवदनव्यालोककालोचितम् ।
कर्तुं योऽक्षिसहस्रमीलनमलं नासीत्तदा सीदत-
स्तस्येन्द्रस्य मनोरथप्रदशरं चापं प्रभोश्चिन्तये ॥ ४३ ॥
हेषामश्वगणस्य बृंहितमिभव्यूहस्य चक्रक्रम-
क्रेंकारं रथमण्डलस्य समरे क्ष्वेलां भटानामपि ।
भेरीभांकृतिमायुधव्यतिकरध्वानं पृथङ्मागध-
स्तोत्रोद्घोषमपि ज्यया परिभवद्देवस्य वन्दे धनुः ॥ ४४ ॥

एकं देहभृतामुभे हुतभुजस्त्रीण्यामयानां प्रभो-
श्चत्वारि द्रुहिणस्य पञ्च विषमापाङ्गस्य षट् शाङ्करेः ।
सप्त त्रीणि च रावणस्य फणिनां पत्युः सहस्रं तुद-
ज्ज्यानादेन शिरांसि संयति धनुर्यात्तुद्वहः पातु नः ॥ ४५ ॥

शाक्तं स्मारय चाण्डिकं विकलय ब्राह्मं समुत्सारय
स्कान्दं तर्जय यानमित्यधिरणं यत्क्रीडति ज्यास्वनैः ।
तूर्णं विस्मितसिद्धचारणगणप्रस्तूयमानस्तव-
व्याप्ताशेषदिशे नमोऽस्तु धनुषे सप्ताश्ववंशप्रभोः ॥ ४६ ॥

नश्यन्विद्रुमहापुमांसि नटनक्रीडाचलक्रौञ्चभि-
द्वाहाञ्चत्तनुरूंहि सुम्भदमनायानाहितक्रुन्धि च ।
सीदत्कुम्भिककुम्भि सिद्धपरिरम्भारम्भियोषिन्ति खे
कुर्वाणं गुणटंकृतानि समरे कोदण्डमीडे विभोः ॥ ४७ ॥

यन्मौर्वीनिनदे निरुन्धति युधि द्यावापृथिव्यन्तरं
दृग्भिर्द्वादशभिर्विलोक्य शिखिनो यानस्य नृत्तं पुनः ।
षड्भिः स्तौति गुहो मुखैः प्रियतमापर्यायपीताधरैः
सीतान्तःपुरधन्व तन्मृडजटाशीतांशुवक्रं भजे ॥ ४८ ॥

स्वं पाशाङ्कुशदन्तमोदकधृतौ दोष्णां चतुष्कं दिश-
न्हेरम्बो निजवल्लभामभिमृशन्काञ्चीपदे शुण्डया ।
कर्णौ च्छादयितुं विषीदति चिराद्दोरन्तरासंभवा-
द्यज्ज्याघोषविजृम्भणे युधि धनुस्तद्राघवीयं भजे ॥ ४९ ॥

यद्घोषप्रथमप्रबोधितरमाप्राणेशवामेक्षण-
च्छायामीलितनाभिपङ्कजकुटीगर्भस्थितोऽप्यब्जभूः ।
कर्णैरष्टभिरात्मनोऽप्यकलितामेवाध्यगीष्ट त्रयीं
नद्धं तेन गुणेन राघवधनुर्विद्येत हृद्येव नः ॥ ५० ॥

कल्पापायवितर्ककर्कशहरव्यासुक्तभीमध्वनिं
व्यामृष्टान्तरविन्ध्यकन्दरशिलाविष्टब्धदुष्टद्विपम् ।

ज्याघोषक्षणमाक्षिपत्किल विधिर्यस्य त्रसद्भारती-
जिह्वात्यागगृहीतकण्ठवसतिस्तद्रामचापं भजे ॥ ९१ ॥
कल्पान्तक्षणबद्धकौतुककरप्रस्फालितोरूत्पत-
द्भर्गोन्मुक्तमहाट्टहासपरुषज्याघोषविप्रो········ ।
········शार्ङ्गभृतः सुखेन वहता लघ्वीभवन्तीं तनुं
चक्रीन्द्रेण कृतस्तवं युधि विभोश्चापं शरण्यं मम ॥ ९२ ॥
संवर्तव्यतिषङ्गभङ्गुरकृपभ्रूभङ्गगङ्गाधर-
क्ष्वेडाचण्डिमगर्वखण्डननिजज्यानाददीनात्मनि ।
व्यालेन्द्रस्य दृशां सहस्रयुगले पातालवास्तव्यया
प्रस्ताव्यस्तवविस्तरं जनतया नाथस्य चापं भजे ॥ ९३ ॥
काकुत्स्थस्य धनुस्तदेव कलये गर्जासृजा यज्ज्यया
बाधिर्ये भुवनत्रयस्य जनिते का मेऽस्तु का मेऽस्त्विति ।
बाणोत्खण्डितयातुवीरसुरवाग्गुम्भेन मामेहि मा-
मेहीत्यप्सरसां वचांसि च समं कुण्ठीभवन्ति द्यवि ॥ ९४ ॥
अव्यादव्ययदीव्यदाशुगजवव्याधूतदिव्यापगा-
नव्याब्जव्यवसृप्तभव्यमधुपव्याजाभ्रसेव्याम्बरम् ।
क्रव्यादव्यथनोत्थना[1]व्यरुधिरव्याप्ताजि क[2]व्युक्तिभि-
र्व्यङ्क्व्यश्र्यपसव्यसव्यभगवत्पाणिव्यवस्थं धनुः ॥ ९५ ॥
दुर्लङ्घ्याशरसङ्घसङ्गरपरिक्रामद्धनूमल्लल-
ल्लाङ्गूलाग्रनियन्त्रितप्रतिभटक्रव्यादरोदध्वनिः ।
यज्ज्यागर्जितपूर्णकर्णविवरैर्नामानि वैमानिकैः
शर्मार्थं नमिकर्म धार्मिकविभोस्तत्कुर्महे कार्मुकम् ॥ ९६ ॥
खड्गान्पातयतः शरान्विकिरतः शक्तीस्तनौ मुञ्चतः
पद्भ्यां मृद्गति मुष्टिना घ्नति तलेनाविध्यति द्वेषिणः ।
उत्साहं जनयत्प्रभञ्जनसुते तत्साधु भूयो रणे
ज्यानादै रघुनाथकार्मुकवरं शर्माणि निर्मातु नः ॥ ९७ ॥

---

१. नावा तार्य. २. कवीनामुक्तिभिर्व्यङ्क्व्या श्रीर्यस्य तत् इत्यर्थः.

एकद्वान्वपुषा दृशा त्रिचतुरान्पादाहतैः पञ्चषा-
न्सप्ताष्टान्करताडनैर्नवदशाञ्जानुप्रहारैररीन् ।
युद्धे द्रावयता कृतं हनुमता चण्डाट्टहासध्वनिं
ज्यानादेन विवर्धयद्रघुपतेश्चापं भजे संपदे ॥ ९८ ॥

आढ्यंभावुकमर्चिषा सरभसान्धंभावुकारातिना
स्थूलंभावुकहर्षवानरचमूदृष्टिप्रियंभावुकम् ।
तत्पायाद्धनुरुत्पतिष्णुविशिखं वर्धिष्णुघण्टारवं
रोचिष्णुज्यमलंकरिष्णु समरं वर्तिष्णु हस्ते विभोः ॥ ९९ ॥

कालीकेलिकरालमांसलरणक्ष्माधूलिपालीजल-
क्ष्वेलापेतवलीमुखालिकवलीकालिव्यलीकच्छिदम् ।
खेलन्तं गलदर्यरालकुरलाधारालदृक्कज्जलं
कालव्यालकुलीनकालियनिभं चापं विभोः शीलये ॥ ६० ॥

द्राङ्निश्चूषितरक्तबीजरुधिरप्राग्भारधारामिल-
च्चामुण्डामुखमण्डलोदरचलज्जिह्वालताह्वायिना ।
विद्धारित्रजविस्रविस्रवदसृग्व्याप्तेन दीप्तौजसा
चापः साभरणः शरेण स रणे पायादपायात्प्रभोः ॥ ६१ ॥

यत्क्षिप्तैरिषुभिर्गृहीतशिरसामायोधने रक्षसां
सद्यः स्वर्गमुपेयुषां सुरवधूतुङ्गस्तनालिङ्गिनाम् ।
वाग्भिर्मन्मथकेलिगद्गदगिरां प्राचीनवैरत्यजां
प्रक्रान्तस्तुति मे चकास्तु हृदये तद्राघवीयं धनुः ॥ ६२ ॥

स्वर्गस्त्रीग्रहणाद्भयं विदधिरे ये यातुधानाः पुरा
तैरेव स्वविमुक्तबाणदलितग्रीवैर्दिवं प्रापितैः ।
स्वैरं हारयदप्यमर्त्ययुवतीरेषा ममैषा ममे-
त्यारब्धस्तुति हृष्यता वलजिता तद्रामचापं भजे ॥ ६३ ॥

रोषश्लेषखराक्षराक्षसचमूपादातदातद्रुत-
क्रोशत्कीशभयापयानपरमज्याघोषघोषद्दिशम् ।

चापं तापनिविष्टविष्टपमनःशोकान्तकान्तक्रियं
रक्षत्वक्षकुमारमारणमहादूतस्य धन्विप्रभोः ॥ ६४ ॥

नाराचक्षतयातुवीरवरणव्यापारिपौरंदर-
स्थानस्त्रीजननिस्तलस्तनतटीपाटीररेणूत्करैः ।
अश्यद्भिः शिशिरांशुरश्मिभिरिव स्फारभ्रमीवारितै-
रप्राप्ताटनि ताटकारिपुधनुः पापानि मे पाटयेत् ॥ ६५ ॥

भक्षालम्पटकङ्कसङ्घचटुलत्रोटीविघट्टत्रुट-
द्रक्षःकोटिकिरोटिकोटिरटितप्रोद्घाटितक्रूरते ।
युद्धे विद्धपतद्धयद्विपतनूविस्रंसिविस्रामिषा-
कृष्टक्रोष्टुनि विष्टपत्रयपतेः क्रीडत्तदीडे धनुः ॥ ६६ ॥

घण्टाचण्डनिनादमण्डितनिजज्यानादनानादल-
व्योम्नः स्थेमविधायकायतकुशीनीकाशनैकाशुगम् ।
चापं तापविलोपदायि भजतां ध्यायामि मायामृग-
प्राणप्रीणितबाणरिङ्खणगुणालंकारि लङ्कारिपोः ॥ ६७ ॥

हस्ते दाशरथेर्दिशो गुणरवैर्भक्ताय भद्रं द्विषा-
माटोपं मरुतां भयं हरिचमूं जेतुं रणे वैरिणः ।
भाति प्राति ददाति दाति हरति प्रीणाति जानाति य-
त्तद्वाञ्छामि च पूजयामि च धनुर्ध्यायामि च स्तौमि च॥६८॥

चक्षुर्लक्षितलोकरक्षि तरुणक्षीबामरैणेक्षणा-
द्राक्षेक्षुद्रवमाक्षिकाक्षिपवचः संधुक्ष्यमाणस्तवम् ।
अक्षीणाक्षमराक्षसक्षयविधारूक्षेषुविक्षेपणं
स्यादैक्ष्वाकऋभुक्षपक्ष्यमशुभक्षोदैकदक्षं धनुः ॥ ६९ ॥

अक्षुभ्यन्मरुदक्षिवीक्षितरणक्षीबर्क्षकीशाक्षय-
क्ष्वेडाधुक्षणदक्षिणक्रियमृभुक्ष्यस्त्रेण भिक्ष्योपमम् ।
रक्षस्तत्क्षणशिक्षणक्षमशरक्षेपक्षरज्ज्यास्वन-
क्षुण्णक्षेमफणीन्द्रचक्षुरवतादैक्ष्वाकपक्ष्यं धनुः ॥ ७० ॥

---

१. 'वर्तुलं निस्तलं वृत्तम्' इत्यमरः. २. स्थामन्शब्दो नास्तीति केचित्. तन्मते स्थेमेति पाठ्यः.

कान्त्या क्षेपयतीन्द्रकार्मुकमदं मन्दांश्च सेनाहरी-
ज्ज्याघोषेण दुरासदं प्रथयति स्वं रक्षसां च व्यथाम् ।
बाणं प्रापयति द्विषो यदपि तान्स्ववर्वारवामभ्रुवां
संग्रामे तदुमेशचापमथितुश्चापं शुभायास्तु नः ॥ ७१ ॥
वन्दे मन्दरशैलकन्दरकुटीवास्तव्यजायापति-
श्रद्धाभक्तिकृताभिधाजपविधेरीशस्य शस्यं धनुः ।
यज्ज्यारावभरावकर्णनदशासातङ्कलङ्कावधू-
गर्भस्रावहृतास्रवासववधूबन्दीपुरन्ध्रीनुतम् ॥ ७२ ॥
तन्वानन्तरशिञ्जिनीरवकिरा शक्रायुधस्य भ्रमं
तन्वानं दिवि देवदानवततेरालोकयन्त्या रणम् ।
मन्वानं शरणार्थिनामभिमतं यच्छेयमित्यन्वहं
मन्वानन्त्यवदन्वयोदधिमणेरन्वेमि धन्वेशितुः ॥ ७३ ॥
पाणिच्छादितकर्णपत्ति भयभृत्सूतावसीदद्रथं
दूरभ्रान्ततुरङ्गमङ्कुशशिखादुर्वारवेगद्विपम् ।
लङ्कानाथवरूथिनीं विकलयत्तारेण घोरेण च
ज्यानादेन रणे धनुर्भगवतो जागर्तु भद्राय नः ॥ ७४ ॥
सक्रोधं दशकन्धरेण सभयं रक्षोभटानां गणैः
साश्चर्यं कपिसैनिकैः सकुतुकं गन्धर्वविद्याधरैः ।
सश्लाघं च विभीषणेन सजयाशंसं च सौमित्रिणा
दृष्टं शक्रसुतद्विषा युधि धनुर्विष्फार्यमाणं भजे ॥ ७५ ॥
कालीयप्रतिवंशविंशतिभुजालंकारलङ्कापुरी-
नाथक्रोधनिरोधसाधनकलाधौरेयधीरध्वनिः ।
जीवा यस्य वयस्यतामुपगतैवायस्यतो रक्षसां
शिक्षायै कलुषक्षयाय भवतात्तद्रामचापं मम ॥ ७६ ॥

---

१. क्षेपयति निरासयति; अन्यत्र क्षिप्रान्करोति. २. प्रथयति कथयति; अन्यत्र पृथुं करोति. ३. प्रापयति गमयति; अन्यत्र प्रियान्करोति. ४. तन्वा मूर्त्या, अनन्तरान् निबिडान्, शिञ्जिनीरवान् किरन्त्या. ५. मनोः राज्ञः आनन्त्यवान् अन्वयः.

युद्धे यद्गुणघोषणानिशमनप्रोन्मीलदीर्ष्यामिथः-
श्लिष्यद्दन्तपरम्पराकटकटाकारातिघोरैर्मुखैः ।
पौलस्त्ये दशभिः प्रदर्शितवति क्रोधं वरो धन्विनां
श्लाघ्यस्यामुमुदे रिपोरुपगमात्तच्चापमर्च्यं मम ॥ ७७ ॥

प्रत्यग्रप्रणयापराधसमयानानन्दमन्दोदरी-
पादाम्भोरुहताडनैरपि सुखाकुर्वद्भिरप्रस्तुतान् ।
कुर्वद्गर्वितराक्षसेश्वरशिरःस्तोमान्निरस्तोपमा-
ञ्ज्यावल्लिस्तनितेन राघवधनुर्धूनोतु दैन्यं मम ॥ ७८ ॥

मा युद्धे प्रवृतो मदुज्झितशरैर्मा तेऽसवो विस्रस-
न्मा रुद्रं हृदि विस्रभः शरणितं मा ते रुचज्जाल्मता ।
इत्याहेव दशास्यमाहवमहीवास्तव्यमस्तव्यय-
ज्यानादेन यदानयेदभिमतं तद्रामभद्रायुधम् ॥ ७९ ॥

स्यादैक्ष्वाकसमीकविभ्रमसखं चापं मम श्रेयसे
यस्य ज्यानिनदस्तनूकृतदशग्रीवाट्टहासो रणे ।
लङ्कोद्यानानिरुद्धमुग्धवसुधाकन्याकपोलस्थली-
रोमाञ्चव्यतिषङ्गमङ्गलसमारम्भैकभेरीरवः ॥ ८० ॥

कुप्यन्मातलिनुन्नवाहनवहत्संक्रन्दनस्यन्दना-
क्रामच्चक्रसमुत्थभूमिरजसामोघेन मोघा दृशः ।
बिभ्राणस्य दशाननस्य बधिरीभावं श्रवोविंशतौ
कुर्वज्ज्यारसितेन कोसलपतेः कोदण्डमीडे रणे ॥ ८१ ॥

कल्पान्तोद्भटचण्डमारुतजवप्राग्भारसंघट्टन-
क्षुभ्यन्नीरदगर्भनिर्भरमिलन्निर्घोषघोरश्रुतिम् ।
ज्यानादं निशमय्य यस्य विवशश्चक्राम मन्दोदरी-
कान्तः शान्तमदो मृधे स जगतां नेतुर्धनुः पातु नः ॥ ८२ ॥

वैरिक्षारितशक्रविक्रमकथानीशानदाशानन-
श्लाघालाघवखिन्नकिन्नरवधूहर्षप्रकर्षप्रदम् ।

घोरज्यारसितेन मानवपतेः कुर्वे धनुर्वेधसा
गेयं सायकभूषमेष मनसि क्षेमाय भीमायतम् ॥ ८३ ॥

लङ्कानाथनिमाथनाथनविधापर्यायपर्यापत-
द्गीर्वाणीमुखवाद्यवाद्यपटुतादुर्वारमौर्वीरवम् ।
वक्रप्रक्रमदुष्टदिष्टदमनं शक्रायुधप्रक्रिया-
निष्णातं रघुमल्लवल्लभधनुर्मुष्णातु तृष्णां मम ॥ ८४ ॥

मौर्वीकर्षणमण्डलीकृतिवशादुर्वीकुमारीपतेः
प्राप्तायाम्बररत्नबिम्बतुलनां सङ्ग्रामरङ्गाङ्गणे ।
दुर्दान्ताशरनाथदुर्दमभुजावीर्याम्बुसंशोषणीं
नाराचद्युतिमञ्जरीं विकिरते चापाय तस्मै नमः ॥ ८५ ॥

चेतश्चातकपोतकल्पचलितानल्पामरालोकित-
श्रीमद्रामशरीरनीरदशचीनाथायुधे धन्वनि ।
पङ्क्तिस्कन्धशरप्रबन्धदलनाधौरंधरीबन्धुर-
ज्याविद्धेषुविमर्ददुर्दिनहरिच्चक्रे मम क्रीडति ॥ ८६ ॥

दृप्यद्राक्षसराजविंशतिभुजीराजीवनालावली-
लावार्धेन्दुसुखेषुमोचनविधिव्याकृष्टमौर्वीरवे ।
रन्ध्रं रुन्धति खस्य भिन्दति भृशं कुम्भांश्च दिक्कुम्भिनां
तुष्टास्तुष्टुविरे पुरायममरास्तं नौमि चापं विभोः ॥ ८७ ॥

चण्डीनाथबलीकृतानि चटुलभ्रूवल्लरीकिंकरी-
भूतामर्त्यकुलानि मृत्युविमुखीकाराट्टहासानि च ।
नाराचेन निराचिकीर्षु समरे शीर्षाणि लङ्कापते-
र्मारीचारिकराब्जचारि महता भावेन सेवे धनुः ॥ ८८ ॥

कल्पान्तोद्भटकालरुद्रवदनव्यादानकेलिस्फुर-
द्दंष्ट्राविक्रमगौरवक्रमगलग्राही जिताहीनिषून् ।
मुञ्चन्पञ्चशरार्तिकीर्तितपरस्त्रीनामनानामुखे
पौलस्त्ये रघुवीरहस्ततुलितश्चापोऽस्तु नस्त्राणदः ॥ ८९ ॥

यज्ज्यावल्लिविमुक्तशंकरजटाचन्द्राभवक्राशुग-
च्छिन्नभ्रंशितपङ्क्तिकन्धरशिरोमुण्डावलीताण्डवे ।
वेतालाः करतालयन्ति विविधं गायन्ति गोमायवः
पश्यन्ति त्रिदशाश्च कश्चन विभोश्चापः स मे पालकः ॥ ९० ॥

पौनःपुन्यविलूनपातितनटत्पौलस्त्यदोर्मस्तक-
श्रेणीदर्शनभीतसिद्धवनिताप्रोन्मुक्तसंदर्शनम् ।
दूरद्रावितरौद्रराक्षसचमूनाथश्रवोदुःश्रव-
ज्यानादं जगदीशचापमगदीकर्तुं प्रवर्तेत नः ॥ ९१ ॥

दंष्ट्राभ्रूकुटिभीमवक्त्रदशकक्रोधाट्टहासप्रभा-
निष्पिष्टस्मयहारयष्टिनि दशग्रीवस्य बाह्वन्तरे ।
विस्रम्भानुपलम्भकं स्वनुदधज्जम्भारिकौतूहलं
नाराचान्निखनद्रणे रघुपतेराराधयामो धनुः ॥ ९२ ॥

मुष्टीमुष्टि तलातलि प्रचलितं क्रव्यादशाखामृग-
व्यूहस्याहवमैहलौकिककथाप्रस्तारविस्तारकम् ।
दृष्ट्वा कष्टमिति त्रिविष्टपजने शंसत्यरं साधयं-
स्तत्कामं शरकृत्तरावणवपुश्चापो विभोर्मे गतिः ॥ ९३ ॥

शश्वन्नश्वरजीवितेश्वरसुखश्रीदृश्वविश्वामरी-
निश्वासश्वसनश्वयद्भुजमहो वैश्वानराश्वेडितम् ।
पूर्वं दुर्वहशर्वपर्वतभृतो निर्वाप्य गर्वं द्विषः
कुर्वत्सर्वसुपर्वनिर्वृतिमवेदौर्वीसुतेशं धनुः ॥ ९४ ॥

पौलस्त्योपरमे परस्परबलग्राहावहेलाग्रह-
व्यग्रोदग्रवलीमुखावलिमुखव्यालोलकोलाहले ।
भूकन्याकमनैकपाणिनलिनन्यासेन धन्याटनि-
श्चापस्तम्भितशंभुकङ्कणनिभः शर्माणि निर्मातु नः ॥ ९५ ॥

सिद्धस्त्रीमुखबद्धहासचपलत्वङ्गत्प्लवङ्गच्छटा-
बक्रानुक्रियमाणकौणपतरुण्याक्रन्दितप्रक्रमे ।

युद्धान्ते धनुरिद्धमुद्धतदशग्रीवान्तवान्ताशर-
स्थैर्ये हृन्मम रामभद्रकरभृत्कोटीकमाटीकते ॥ ९६ ॥
गृह्णद्रामकरारविन्दनखरश्रीपुञ्जमिश्रान्तरा-
मश्रान्तं परिचिन्तये हृदि धनुर्वल्लीं रुजाशान्तये ।
लङ्कानाथनिपातजातकुतुकव्योमाङ्कसङ्गीभव-
द्गीर्वाणीरमणीयगीतिसरणीनिष्पन्नपुष्पामिव ॥ ९७ ॥
मायद्यातु विभिद्य यद्युधि शरैरामोद्य विद्याधरी-
स्तद्वक्त्रोद्यतगद्यपद्यनुतिभिः सद्योऽभवद्योजितम् ।
धन्व द्योमणिवंशनद्यधिपतिप्रद्योतिशीतद्युते-
र्देवाद्यस्य तदद्य हृद्यनुपमां विद्यां प्रदद्यान्मम ॥ ९८ ॥
बाणाशीविषशीर्णशीकरदशीभूताम्बुराशीडितं
जन्यं शीतलशीलशालिरघुभूशीतांशुशीघ्रोद्यतम् ।
वाताशीशवशीकृतश्रि दशशीर्षाशीःकृशीयस्त्वकृ-
त्क्रव्याशीकुलशीधुशीलनहरं चिन्वीत चापं वचः ॥ ९९ ॥
चञ्चत्कुण्डलगण्डकाण्डरुहभूवाङ्मण्डलीवर्णितं
तद्ब्रह्माण्डकरण्डखण्डनगुणोच्चण्डस्वनालंकृतम् ।
चण्डीशानशिखण्डखण्डशशभृत्पाण्डित्यवैतण्डिकं
मार्ताण्डान्वयमण्डनस्य हृदि मे कोदण्डमाहिण्ड्यते ॥ १०० ॥
बाणः श्रीरमणो गुणः फणिपतिर्लक्ष्यं पुराणां त्रयं
वोढा धूर्जटिरेव यस्य बिसवत्तद्येन लूनं धनुः ।
तेन श्रीरघुवीरबाहुयुगलेनारोपणीयं रणे
यत्कृच्छ्राद्भवति श्रियं दिशतु मे तच्चापमुच्चावचाम् ॥ १०१ ॥
ये खिद्यन्ति तपस्विनः कथमपि प्रत्याहृतैर्मानसै-
र्ये वैते विषयानुरक्तमनसो द्रुह्यन्ति नक्तंचराः ।
यल्लीलाव्यपनीयमानतमसः स्वर्यान्ति तेऽपि द्वये
तत्पुण्यं शरणीकरोमि धरणीकन्यापरिण्यो धनुः ॥ १०२ ॥

१. काण्डरुहभूः ब्रह्मा. २. धरणीकन्यापरिणीः श्रीयमस्तस्य.

पुष्यत्तक्षकभोगविभ्रमजुषां येषाममभूत्कन्दुक-
क्रीडाकौतुकहेतुरद्रिरभवच्च(तुलश्च)न्द्रार्धचूडामणेः ।
मौर्व्यै दुर्विनमं दशाननभुजैस्तैरेव शैवं धनु-
र्भङ्क्त्वर्धन्व विभोः शरण्यमुररीकुर्यामुपर्यायुषे ॥ १०३ ॥
कण्ठं रुन्धति भैषजेन महतामच्छिद्यमाने कफे
मार्गालाभपरिप्लवेन मरुतां संधौ तनोस्त्रुट्यति ।
तामुल्लिख्य दशां विषादविवशं चेतः सुखावाप्तये
चापे दाशरथेर्विषण्णजगतां बन्धाविदं धावति ॥ १०४ ॥
यावत्पावकपुञ्जपिञ्जरदृशो हस्तव्युदस्तायुधा
रुन्धि च्छिन्धि जहीति भीतिदगिरो नृत्यन्ति मृत्योर्भटाः ।
तावद्धावतु चित्तमुत्तमगुणाकल्पे ममाल्पेतर-
क्षेमस्थेमकरे शरासनवरे रामस्य नाम स्वयम् ॥ १०५ ॥
यावद्भीषणवेषकालमहिषग्रीवासमालम्बिनी
घण्टा चण्डमुदञ्चयत्यनुपदं नादं जवादम्बरे ।
तावद्धावितदूतपातचकितव्यावृत्तकीनाशया
मौर्वीटंक्रियया भयं शमयतामौर्वीसुतेशं धनुः ॥ १०६ ॥
एषा दक्षिणतो दिगस्तु महतो यस्यां पथो नावधिः
पान्थास्तत्र चरन्तु येषु भयदा भ्राम्यन्ति याम्या भटाः ।
तेभ्यः पातकिनां व्यथा भवतु या शक्या न सोढुं नृणां
का भीतिर्मम यस्य शर्मणि धनुर्जागर्ति सीतापतेः ॥ १०७ ॥
यत्तेजस्यति कीर्तिकाम्यति युधि प्रह्लान्कुमारीयति
प्रासादीयति देवहस्तकमले भासेन्द्रचापायते ।
रत्नैः पर्वसु लोहितायति भृतैः शब्दायते च ज्यया
तन्नः पातु नमस्यतो रघुपतेश्चित्रीयमाणं धनुः ॥ १०८ ॥
कल्पत्यर्थिनि कालिकाति रसिते कालाग्नियत्योजसि
स्थैर्ये मेरवति श्रिते पितरति श्रीराघवे यायति[1] ।

१. 'योधति' इति स्याचेत्पाठः स समीचीन इति संदृश्यते.

यच्चाप्यर्यमणत्यबोधतमसि द्वीपीनति द्विण्मृगे
चापेऽस्मिंस्तपनीयपट्टघटिते कुर्मो नमः कर्मताम् ॥ १०९ ॥
योऽपास्यन्नपि मार्गण[नभिमतं] दत्ते जनायार्थिने
स्वीकुर्वन्नपि वक्रिमाणमधिकं यः सद्गुणालंकृतः ।
यः श्रीमानपि शश्वदीश्वरकरालम्बेन मध्येकृश-
स्तं चापं चलचामराञ्चितशिखं स्तुध्वं खरध्वंसिनः ॥ ११० ॥
पुत्रेणेव शिलीमुखेन ऋजुना सज्जाययेव ज्यया
रज्ज्यन्त्या सुभटैरुपात्तरुचिभिः सौवर्णपट्टैरपि ।
आराध्यस्य रघुप्रवीरधनुषस्त्रैलोक्यरक्षामणेः
प्राचीनेन फलोन्मुखेन तपसा दासा वसामो वयम् ॥ १११ ॥

इति श्रीरामभद्रदीक्षितविरचितो रामचापस्तवः संपूर्णः ।

---

## श्रीरामभद्रदीक्षितविरचितो
## रामबाणस्तवः ।

मारीचोपज्ञ[1]वेगं बलविजयिसुत[2]प्रेक्षितामोघभावं
पारावारावरोध[3]व्रजविदितमहादुःसहार्चिःप्रभावम् ।
लीलालोलूयमानत्रिदशरिपुशिरोधोरणी[4]दृष्टतैक्ष्ण्यं
भक्तत्राणप्रवीणं शरणमशरणो रामबाणं प्रणौमि ॥ १ ॥
पौलस्त्ये निस्तुलौजस्तुलितहरगिरौ बाधमाने त्रिलोकी-
मग्नौ भग्नप्रभावे द्रवति च पवने क्वापि तान्ते कृतान्ते ।
वित्रस्ते वज्रहस्ते कृतमखिलजगद्रक्षणं येन सोऽयं
त्रण्याच्चण्डीशकाण्डासनभिद[5]भिमतो मार्गणो[6] दुर्गतिं नः ॥ २ ॥
निर्मग्नस्ताटकोरस्त्रुटनविगलितासृक्प्रवाहे सुबाहो-
र्वक्षोमध्यं प्रविष्टो दलितखरवसा[7]पङ्कदिग्धोज्ज्वलाङ्गः ।

---

१. उपज्ञा ज्ञानमाद्यम्. २. इन्द्रसूनुर्जयन्तः काकरूपः. ३. अन्तःपुरम्. ४. पङ्क्तिः. ५. शंभुचापदारी. ६. शरः. ७. मेदः.

मारीचाश्रैकहाराभरणकृतरुचिर्वालिहृत्पद्महारी
पौलस्त्यप्राणकुक्षिंभरिरवतु जगद्रक्षको रामबाणः ॥ ३ ॥
भक्तानामिष्टदाने सुरतरुरुदधेः शोषणे वाडवाग्निः
क्रव्यादव्याजखेलत्प्रबलतमतमःखण्डने चण्डभानुः ।
पुष्णातु क्षेममेकाधिकदलितमहासालषट्कः[1] पृषत्कः[2]
श्रीरामस्कन्धपीठग्रथितशरधि[3]वल्मीकशायी फणीन्द्रः ॥ ४ ॥
प्राप्यानुज्ञामभिज्ञात्कुशिककुलभुवस्तापसात्कोपसान्द्रे
स्वामिन्युन्मोक्तुकामेऽप्यनुचितमिदमित्यन्तरुद्विग्नचिन्तः ।
कंचित्कालं विलम्ब्य स्मृतनिखिलजगद्रक्षणस्तत्क्षणं यः
संतापं ताटकाया व्यधित युधि तमेवाश्रये रामबाणम् ॥ ५ ॥
मौर्वीटंकारघोरश्रवणकटुरटत्ताटकोद्घाटितास्य-
भ्रश्यज्ज्वालाविनश्यद्घनतमतिमिरारण्यलीलाधरण्याम् ।
भिन्दन्यो वृक्षवृन्दं विगलितगरुतं विक्षिपन्पक्षिपङ्क्तिं
कर्षन्मेघान्व्यहार्षीद्रघुपतिविशिखं तं भजे रोगहत्यै ॥ ६ ॥
संभ्राम्यत्ताटकाम्भोवहनिवहरजोवृष्टिनष्टावकाशे
दिक्चक्रे येन चक्रे स्फुटतरुपटलोत्पाटनापाटवेन ।
रंहःसंमुग्धसिंहच्युतमदकरिणा चण्डवातस्य लीला
स स्ताद्राजेन्द्रहस्ताम्बुजवसतिरिषुः श्रीनिदानं सदा नः ॥ ७ ॥
संक्रुद्ध्यत्ताटकाभ्युत्पतनजवसमुद्भूतपीत्कारघोर-
व्यात्तास्योद्वान्तवक्षःस्रवदसृगभितस्वप्रवेशप्रदेशः ।
लीलाविध्वस्तमूलावनिरुहनिवहानुद्रुतो रौद्रवेगो
हर्षाद्द्यामावृणोद्यो हरतु स दुरितं रामभद्रस्य बाणः ॥ ८ ॥
नीलाम्भोवाहलीलां विदधति दलिते ताटकाबाहुमध्ये
विद्युल्लेखामिवैकामुदसृजदसृजा वाहिनीं लोहिनीं यः ।
दीप्तानां प्राप्तिमावेदयितुमिव भुवि स्वप्रतापातपानां
बाणो राजेन्द्रतूणोदरकृतभरणो वैरिणोऽसौ कृणोतु ॥ ९ ॥

१. दलितसप्तसालः. २. बाणः. ३. तूणीरः.

येन प्रौढेन मध्ये[1] महितरसभरालंक्रियाकल्पकेन
श्लोकानुत्पादयित्रा रजनिचरकुलोत्पाटनानाटकस्य ।
न्यस्तं प्रस्तावनायाः सपदि किल पदे ताडनं ताटकायाः
सोऽस्माकं रामबाणः सुललितरचनां सूक्तिमाविष्करोतु ॥ १० ॥
हस्तोदस्तात्रिशूलक्षपितमुनिपृथुस्कन्धनिष्यन्दमान-
स्फारासृक्पूरधाराभजनजठरभृत्ताटकापाटनेन ।
नन्दद्योगीन्द्रवृन्दस्तुतिमुखरितदिक्चक्रवालान्तरालो
रक्षेदिक्ष्वाकुचूडामणिकरकमलोत्सङ्गशायी शरो नः ॥ ११ ॥
होतर्युन्मुक्तशस्त्रे विरमति सहसोद्गातरि स्तोत्रगाना-
दध्वर्यावस्तपात्रे द्रवति किमिदमित्युन्मिषत्यन्यलोके ।
यो वेगादुज्जिजृम्भे कुशिकसुतमखे वर्षतो विस्रमास्रं
रक्षोमेघाञ्जिघांसुर्घटयतु स घनां संपदं रामबाणः ॥ १२ ॥
दुर्दान्तो रक्तबिन्दून्विकिरति परितो वेदिकां कौशिकस्ये-
त्यर्धोक्ते सिद्धसङ्घैर्झटिति पटुतरो यः शठं ताटकेयम् ।
धृत्वा धूत्वार्दयित्वा जलनिधिकुहरे मज्जयामास वेगा-
द्रोगानस्माकमुच्चाटयतु स जवनः सायकस्ताटकारेः ॥ १३ ॥
विश्वामित्रीयसत्रप्रतिहतिकलनोड्डामरव्योमरङ्ग-
त्वङ्गन्मारीचदूरीकरणरयसमुद्धूतजीमूतचक्रः ।
तत्कालोद्भूतहर्षाद्भुतभयशबलस्वान्तयोगीन्द्रदत्त-
द्राघीयःश्लाघनोक्तिर्दलयतु दुरितं सायको राघवीयः ॥ १४ ॥
मौलिभ्रश्यत्किरीटं गलपरिविगलच्चारुमुक्ताकलापं
त्रासोद्यन्मुष्टिबन्धश्लथकरयुगलस्रंसमानासिखेटम् ।
दूरक्षिप्तान्तरीयप्रकटकटितटीबद्धकौशेयकक्ष्यं
धून्वन्मारीचमुच्चै रघुपतिविशिखः पावनो नः पुनातु ॥ १५ ॥
स्रस्तव्यालोलकेशे ततकरचरणच्छादिताशावकाशे
त्रासव्यात्तास्यगर्तप्रकटितविकटाक्रन्दितोद्घोषघोरे ।

---

१. 'मध्येमहि तरसभरालंक्रियाकल्पकेन' इति च पदच्छेदः.

मारीचे व्योम्नि धूते भयतरलवधूस्वैरसंश्लेषहृष्य-
त्सिद्धश्रेणीनिबद्धस्तुतिरवतु सदा राघवीयः शरो नः ॥ १६ ॥
भग्नर्षिस्कन्धरन्ध्रस्रुतममितमसृक्पूरमुत्कण्ठितेन
प्रागाकण्ठं निपीतं वमयितुमिव यस्ताटकेयेन गाढम् ।
भ्रामंभ्रामं तमग्रे भ्रमिरभसदलत्संधिबन्धं विजह्रे
दारिद्र्यं दारयेद्द्राक्स्वयमयमिह मे रामभद्रीयबाणः ॥ १७ ॥
रंहोनिर्धूतमूर्धच्युतमुकुटतटभ्राजिमाणिक्यराजि-
श्रीपुञ्जाव्याजनव्यारुणितपतदसृक्पाटलं यज्ञवाटम् ।
क्रूरोऽयं ताटकेयो व्यतनुत इति तं क्रोधतोऽम्भोधितोये
सद्यः प्रापातयद्यस्तमिषुमिह विभोश्चिन्तयाम्यन्तरङ्गे ॥ १८ ॥
क्षिप्तश्चण्डानिलेनाम्बुद इव गगने येन वेगोत्तरेण
न्यञ्चन्कुत्राप्युदञ्चन्क्वचिदपि विततः क्वापि भग्नः कुहापि ।
मारीचः प्राप वाचप्रचमकरघटानिर्भरं गर्भमब्धेः
कौसल्यासूनुबाणः कलयतु स रुचा पेशलः कौशलं नः ॥१९॥
भ्रश्यन्मारीचपातप्रचलितसलिलोत्पीडनिर्वेलमूर्छ-
त्कल्लोलोत्खातमूलोद्दलिततटमहीरूढतालद्रुजालः ।
वेगोद्भिन्नाम्बुपूरोदरविवृतलुठन्नक्रपाठीनचक्र-
श्चक्रे येनार्णवस्तं मनसि मनुमहे रामकाण्डप्रकाण्डम् ॥ २० ॥
ऊर्ध्वक्षिप्तार्धतारप्रतिभयनयनं वक्रदंष्ट्राग्रदष्ट-
स्थूलास्यप्रान्तलोलद्रसनमुरुनसाप्रस्रुतोद्धुद्धुदास्रम् ।
हृन्मर्मस्फोटकर्मण्यरमुपजनिते येन मारीचसैन्यं
खादन्नशीददभ्रं दिशतु स कुशलं दाशरथ्याशुगेशः ॥ २१ ॥
विध्वंसन्ते शकुन्ता युगविगमघनस्फारनिर्घातघोरं
मौर्वीनिर्घोषमुर्वीरुहशिखरगतास्तूर्णमाकर्ण्य यावत् ।
यस्तावत्त्रस्तधावत्सुरजनमभिनद्बाहुमध्यं सुबाहो-
र्ज्वालानिष्पीतकालानलबहलमदं रामबाणं तमीडे ॥ २२ ॥

यश्चापज्यापविद्धः सपदि घनपदव्यन्तमुत्पत्य कृन्त-
न्बाहामध्यं सुबाहोरतिरभसवशादप्यनासक्तरक्तः ।
सेवासंनद्धदेवावनमितमुकुटोद्दीप्तमाणिक्यसूत-
श्रीपुञ्जेनाररञ्जे स भवतु भगवत्सायकः श्रेयसे सः ॥ २३ ॥

भित्त्वा सत्त्वानुरूपं झटिति घनमुरः क्रामति व्योमरङ्गं
यत्र भ्रश्यत्तनुत्रः पतदसिलतिकारिक्तबाहुः सुबाहुः ।
प्रागभ्यासादिवागस्कृदजनि पुनरप्यास्रविस्रावणेन
स्थानारण्ये मुनीनामवतु स जवनो रामनाराचराजः ॥ २४ ॥

यश्चञ्चत्कङ्कचञ्चूपुटहठविकटाकृष्टभीमान्त्रजाला-
न्विद्राणक्रोष्टुघोणाधृतपिशितगलद्रक्तसंसिक्तमार्गान् ।
खण्डंखण्डं सुबाहोर्भटकुलमकरोत्कौशिकस्याश्रमान्ता-
न्कौसल्यासंभवस्याशुगमखिलरुजाशान्तये चिन्तये तम् ॥२५॥

कर्मप्रत्यूहभङ्गान्नियमिपरिषदो भव्यहव्योपलम्भा-
द्दिव्यानां क्रव्यदानादपि वनपततामुत्तमां प्रीतिमत्ताम् ।
प्रायच्छत्ताटकेयप्रमुखमखरिपुक्षोदरूक्षोदयो यो
वन्दे तं देववृन्दस्तुतमुषितमिषुं रामहस्तारविन्दे ॥ २६ ॥

कोदण्डे भार्गवेण त्रिपुररिपुधनुर्भङ्गरुष्टेन दत्ते
भक्तिप्रह्वाब्धिकन्याकरकमलपरिक्षिप्तगन्धाक्षताङ्के ।
संनद्धः सिद्धविद्याधरसुरपरिषत्पक्ष्मलाश्चर्यवीक्षा-
पात्रीभूतः स पत्री भवतु शुभवहोऽस्माकमैक्ष्वाकधार्यः ॥२७॥

ज्वालानिर्दग्धमूलावदलनविगलत्काञ्चनस्तम्भमौलि-
व्यत्यस्तभ्रश्यदत्यद्भुतमणिशिखराक्षिप्तनश्यद्विमानान् ।
सौवर्गान्भार्गवीयप्रचुरतरतपःसाधितान्बाधितारं
लोकानापन्नशोकानपनुदघनुदं नौमि रामस्य बाणम् ॥ २८ ॥

पक्षव्याक्षेपरूक्षस्यदचकितमिषत्सिद्धगन्धर्वयक्षं
धावन्तं देववृन्दं प्रति मम शरणं त्वं भव त्वं भवेति ।

एषा रोषाज्जयन्तं करटतनुमनुक्रामते भीमतेजो-
नुद्धचाय स्यान्नमस्या मम रघुवृषभप्रेयसे सायकाय ॥ २९ ॥
त्राणानीशे हुताशे वितरितुमभयं पाशभृत्युज्झिताशे
रक्षावैमुख्यदीक्षां विदधति धनदे वज्रहस्ते विहस्ते ।
काकेनालम्भि लोके क्वचिदपि न किल त्रस्यता यस्य पाता-
द्रामादन्यः शरण्यः प्रथयतु स शुभं मैथिलीनाथबाणः ॥३०॥
[1]मारीचानुप्रचारावहितनवमृगाकाररक्षोयुगोरः-
प्रध्वंसस्रंसिमांसग्रसनरसनटत्संकुलश्येनकङ्कम् ।
कुर्वन्प्रह्वाधि सर्वंकषगुणघटितो दण्डकामण्डलं यः
संचिक्रीडे तमीडे तपनकुलमणेः सायकं भावुकाय ॥ ३१ ॥
घोरासृग्वर्षिधाराधरमवनिपतत्तुङ्गरथ्याश्वसङ्घं
दुष्टश्येनोपविष्टध्वजशिखरमुरुक्रन्दगोमायुचक्रम् ।
नासीरं पूर्व[2]मासीदति सपदि खरे योद्धुमुन्नद्धधूमो
युद्धाशंसामशंसत्किल रघुपतये यः स बाणः पुनातु ॥ ३२ ॥
एकोऽनेकोपरोधश्चरतु कथमिति व्याकुले दिव्यलोके
युद्धालोकाय बद्धादरमनुपतति व्योमसीमां विमानैः ।
तच्चिन्तां भङ्क्तुमेको दशशतमिति यो जातु मुक्तोऽपि यातु
क्षिप्रं चिच्छेद दीप्रं तमिनकुलमणेः सायकं भावयामः॥ ३३ ॥
रुन्धन्रक्षोद्दगन्धंकरणरुचिभरैरन्तरिक्षं तरस्वी
वृन्दं वृन्दं विभिन्दन्समिति खरचमूचारिणां वैरिणां यः ।
नन्दन्नाकेशमन्दप्रचलितनयनाम्भोजसंभावितोऽभू-
दन्तर्ध्यायामि संतर्पितमुनिसदसं तं शरं वंशनेतुः ॥ ३४ ॥
गोमायुत्यक्तभीमायुधसचिवभुजच्छेदसंबाधमुर्व्या-
मुच्चण्डश्मश्रुमुण्डग्रहविमुखवलद्गृध्रनीरन्ध्रमूर्ध्वम् ।
धर्मारण्यं वितन्वन्नपि खरसमरे तापसारब्धसार-
स्तुत्यानत्यास्पदं यः समजनि तमहं रामबाणं नमामि ॥ ३५ ॥

१. अत्रारण्यकाण्डे एकोनचत्वारिंशसर्गोक्ता रामायणकथानुसंधेया. २. आसीदति सति.

[1]सद्यःसंघट्टरंहस्त्रुटितखरचमूचक्रचञ्चत्करीन्द्र-
स्कन्धस्त्रुद्भिस्रगन्धक्षतजतटवतीनद्धडिण्डीरबुद्धिम्।
कुर्वन्पश्यज्जनस्य व्यपदलितसितच्छत्रमूर्च्छद्द्रुचीभिः
पृथ्वीपुत्रीशपत्री विपदमनुपदं हन्तु निर्विण्णबन्धुः॥ ३६॥

कृत्तच्छत्रप्रभग्नध्वजमुपदलितस्यन्दनं मारिताश्वं
निर्भिण्णस्कन्धगन्धद्विरदमवयवच्छेदनिष्पन्दयोधम्।
चिक्रीड क्रूरमेव प्रखरखरचमूचक्रमाक्रम्य यः प्रा-
ज्ञद्रोगानेष विद्रावयतु भगवतो रामभद्रस्य बाणः॥ ३७॥

भग्नासिच्छिन्नशक्तित्रुटितपरिघनिर्भिण्णकोदण्डलून-
प्रासोत्कृत्तत्रिशूलप्रभृतिभिरवनीमायुधैराशराणाम्।
द्यामप्युद्यत्कबन्धव्रजगलविवरोद्गच्छदास्रच्छटाभिः
संरुन्धन्नः सिमिन्धां खरसमरविधौ संपदे रामबाणः॥ ३८॥

क्वापि च्छिन्नैः शिरोभिः क्वचिदपि दलितैर्दोर्भिरेकत्र कृत्तैः
पादैरन्यत्र लूनैरवयवशकलैः क्रव्यमात्रानुभाव्यैः।
आस्तीर्यास्तीर्य भूमिं व्यहृत खरचमूरक्षिणां रक्षसां यो
गुर्वीमुर्वीकुमारीसहचरविशिखः स श्रियं नस्तनोतु॥ ३९॥

भिन्दन्स्वच्छन्दमुद्यन्नखरुचिकुसुमं दूषणाख्यद्रुमस्य
स्त्यायद्रत्नाङ्गुलीयद्युतिकिसलयितं बाहुशाखायुगं यः।
[2]आरण्यायां धरण्याममृडयत दृढं मण्डली[3]मण्डजानां
जानाम्येकं शरण्यं विपदि सपदि तं जानकीजानिबाणम्॥४०॥

आतङ्कोड्डीनकङ्कस्थगितघनपथं भीतगोमायुधूत-
क्रव्यादानं भयव्याकुलहरिणकुलाक्रान्तपर्यन्तकुञ्जम्।
गात्रं यो दूषणस्य त्रुटितभुजमवापातयद्भीतयत्नं
त्राता मे सोऽस्तु सीतारमणकरमहामण्डनं काण्डवर्यः॥ ४१॥

---

१. शृङ्गपादविहीनोऽयं श्लोकः. शृङ्ग=ए ऐ ओ औ=एङ्; पाद=आकारः. २. अरण्ये भवायामारण्यायाम्. ३. अण्डजानां गृध्राणां मण्डलीममृडयत मृडां सुखितामकरोत्. 'मृड सुखने.' इगुपधात्कः. ततः 'तत्करोति–' इति णिच्. 'णिचश्च' इति लिङस्तङ्.

[1]स्थूले माहाकपाले शिरसि निपतिते प्रोज्झिते च प्रमाथि-
न्याशु स्थूलाक्षनाशे सति द्रगपनयादर्दिते चान्यसैन्ये ।
पश्यद्भिः श्येनगामिप्रभृतिषु निधनं व्योम्नि विद्याधराद्यैः
संतुष्टैस्तुष्टुवे यः स रघुपतिशरस्त्रायतामायतौ नः ॥ ४२ ॥

[1]सर्पास्यं द्रागपास्यन्परुषमपि रुषा तर्जयन्दुर्जयस्य
छिन्दन्देहं च वैहंगममसुविगमाभिज्ञयन्यज्ञशत्रुम् ।
जन्यावन्यामथान्यानपि खरपृतनामद्ध्यगानाशु विद्ध्य-
न्कुर्याद्भूमीकुमार्याः कमितुरिषुवरः संपदं सांप्रतं नः ॥ ४३ ॥

संरुष्टक्रोष्टुकृष्टक्षितिपतिततनूभङ्गनिःशङ्ककङ्क-
क्रोधोपावर्तिताधोरणमुखविकलस्कन्धरन्ध्रान्त्रजालम् ।
दृष्ट्वा नासीरमासीद्रणरणरणकस्रस्तशस्त्रस्त्रिशीर्षे
यत्र क्रीडत्यमित्रच्छिदि स दिशतु शं भूमिपुत्रीशपत्री॥ ४४ ॥

आतन्वन्नेकतोऽपि प्रवणवनतसंपातमात्रापसर्प-
त्कृत्तत्रैमूर्धमूर्धत्रयपिशिततृषानुद्रवद्गृध्ररौद्राम् ।
अन्यत्रामर्त्यहस्तोज्झितकुसुमवलद्गन्धलोभान्धभृङ्ग-
श्यामामृष्याश्रमक्ष्मां रघुवृषभशरः शर्म मे निर्मिमीते ॥ ४५ ॥

एकस्तूणीरगर्भे दश धरणिसुतानाथहस्ताभिमर्शे
चापारोपे सहस्रं प्रयुतमुडुपथे न्यर्बुदं कर्बुरेषु ।
दृष्टो यो वेगकृष्टोपहतखररथः सिद्धगन्धर्वयक्षै-
रक्षीणं दीनरक्षी दिशतु स कवितादाक्ष्यमैक्ष्वाकबाणः ॥ ४६ ॥

हेमाकल्पाभिरामां कुपितखरकरप्रेरितां प्रावृताशां
वीरुन्नद्धावनीरुत्समुदयमुदयद्विस्मयं भस्मयन्तीम् ।

---

१. 'महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा । चत्वार एते सेनान्यो दूषणं पृष्ठतो ययुः ॥ श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः । दुर्जयः करवीराक्षः परुषः कालकार्मुकः ॥ मेघमाली महामाली सर्पास्यो रुधिराशनः । द्वादशैते महावीर्याः प्रतस्थुरभितः खरम् ॥' इति श्रीरामायणे त्रयोविंशे सर्गे.

दूरादभ्राम्बुधारां मरुदिव बिभिदे यो गदां रोगदायी
यातूनामेष दूनावनपटुरवताद्राममभद्रस्य बाणः ॥ ४७ ॥

केतुर्भग्नो निपेतुर्भुवि शबलरुचो दारिताङ्गास्तुरङ्गा
नीतः सूतस्य मूर्धा गलगलितदशां जातभङ्गः शताङ्गः ।
इत्यायान्तं निहत्याहवशिरसि खरं रुष्टमुन्मृष्टशोक-
स्वर्गस्त्रीवृष्टकल्पद्रुमकुसुमजुषं राघवेषुं निषेवे ॥ ४८ ॥

जीवन्नेवैष धावन्मम कनकमृगः शक्यते न ग्रहीतुं
हन्यां तेनेति वन्यामभिमृशति विभौ यं करालं करेण ।
भीतः प्राग्वत्पपात व्यसनभरमये वीतमुद्रे समुद्रे
मारीचः क्ष्माकुमारीरमणशरमणिं तं शरण्यं भजामः ॥ ४९ ॥

मेघश्यामे घनानां विपिनविटपिनां कञ्जकिञ्जल्कपुञ्ज-
च्छायादायादमायामृगवपुरचिरज्योतिषा भाति षण्डे ।
यस्यारोपेण चापे द्रुतमुपजनितो गर्जितं निर्जिगाय
ज्यानिर्घोषोऽघशोषोपजननमिषुमिमं भावये राघवीयम् ॥ ५० ॥

चापे यस्याधिरोपे सति भयतरलव्याजसारङ्गराज-
व्योमप्रस्तीमभीमत्वरखुरशिखरस्तोकलीढावनीकम् ।
जानस्थानान्तरालं घनगुणरणिताध्मातदर्यन्तभीत-
व्याघ्रानाघ्रातरोहित्पिशितमजनि तं रामबाणं भजामः ॥ ५१ ॥

सांकुर्वत्पुङ्खकङ्कच्छदजवचकितोद्भ्रान्तशाकुन्तपङ्क्ति-
व्यातन्वत्पक्षवातश्लथवनकुसुमैः किंचिदन्वञ्चिताय ।
मायासारङ्गकायाभिमुखनिजमुखप्रस्फुरद्भिः स्फुलिङ्गै-
रुन्नद्धायास्मि बद्धाञ्जलिरवनिसुतानायकस्याशुगाय ॥ ५२ ॥

येनाविद्धः समिद्धज्वलनकणकिरा मर्मणि क्रूरकर्मा
क्षिप्रं तालप्रमाणं खमुपनिपतितः[1] स्रस्तपर्यस्तकङ्कम् ।

---

१. 'खमुपनिपतितः स्रस्तपर्यस्तकेशम्' इति स्थिते पाठः समीचीनः स्यादिति प्रतिभाति.

प्राणस्यानुप्रयाणं विदधदिव दिवं प्रस्थितस्यावभासे
दासे मय्याधिमासेदुषि स तु भवतु त्राणदो रामबाणः ॥ ९३ ॥
दीर्घाक्षं चारुशृङ्गं मुखमजनि करालेक्षणं वक्रदंष्ट्रं
किंचाङ्गीणां चतुर्णां त्वरितमभवतां द्वौ भुजौ द्वौ च पादौ ।
नष्टा लाङ्गूलयष्टिर्नवसिचयमयी कापि कक्ष्या तु दृष्टा
यत्कोटिस्पृष्टमात्रे हृदि कपटमृगे तं भजे रामबाणम् ॥ ९४ ॥
मायां व्यङ्क्तुं स्वकीयामिव दलनमिषान्मायिके ताटकेये
कायं तस्याक्षिपेयं त्रिजगति कपटप्रायमैणं विधूय ।
मग्नाक्षं दीर्घकूर्चस्तबकमुरुनसं तुन्दिलं तालजङ्घं
घोरं रक्षःशरीरं व्यतनुत भगवत्सायकं तं भजामः ॥ ९५ ॥
सारङ्गीयं शरीरं प्रथममथ तनुं राक्षसीं रूक्षशीलां
दूरीकृत्यान्यदूरीकृतवति च वपुर्दिव्यमव्याजभव्यम् ।
मारीचे सिद्धनारीकरतलगलितानल्पकल्पद्रुपुष्प-
श्च्योतन्माध्वीविधूतक्षतजमलिनिमा पातु मां रामबाणः ॥९६॥
उन्मीलत्सालजालत्रुटनविगलिताशङ्कतुङ्गप्रमोद-
त्वङ्गच्चेतःप्लवङ्गप्रकरकरयुगच्छिन्नमाल्यप्रसूनम् ।
तत्कालप्रोतशैलक्षितितलयुगपद्दर्शनाश्चर्यधुर्य-
श्लाघाकृत्किन्नरौघावृतगगनतलं रामबाणं भजामः ॥ ९७ ॥
सारण्यग्रामपृथ्वीभरदुरवनमोत्तुङ्गसर्वोत्तमाङ्ग-
प्रोद्यद्वैफल्यशल्यज्वरितफणधरग्रामणीभक्तिदृष्टः ।
भूरिश्रद्धानिबद्धस्तवनतभुजगीदृक्प्रसूनार्च्यमानो
भित्त्वा सालान्प्रविष्टः फणिपतिभुवनं पातु रामस्य बाणः ॥९८॥
खेलद्धेमाब्जमालं[1] शकलितरणकृद्दुन्दुभिक्रूरशृङ्गं
कक्षप्रक्षिप्तरक्षःपतिविधुतशिरःप्रान्तघातक्षमान्तम् ।
तारावक्षोजभाराहृतघुसृणरसं वालिनो बाहुमध्यं
विध्यन्बाणो विदध्यान्मम शुभमनिशं रामतूणीरधामा ॥९९॥

१. अयं श्लोको जानकीपरिणयनाटकेऽपि (६।६७) दृश्यते.

तारातारप्रलापद्विगुणितकरुणाक्रन्दकिष्किन्धमुद्य-
त्त्रासापक्रान्तकीशप्लवननिपतितानोकहानेकशाखम् ।
सुग्रीवान्तःसमग्रीभवदरिपतनानन्दमिन्धानरूपं
चित्ते कृत्तेन्द्रसूनुं रघुपतिविशिखं शीलयामः शुभाय ॥ ६० ॥

ईडे वीरस्य गाढश्रयितघनजटामण्डलस्य श्रमाम्भः-
सिक्तालीकस्य वीचीनिचयवलयिने कुप्यतः सागराय ।
आरक्तापाङ्गलीढश्रुतिनिकटचरन्मुष्टिसंदष्टमूलं
चापातिक्रान्तशल्यज्वलदनलमिषुं शान्तये साध्वसानाम् ॥६१॥

संस्तृतज्वालतप्तप्रबलगिरिदरीगर्भनिर्भेदखेद-
क्षुभ्यद्धर्यर्क्षरूक्षध्वनिचकितगजोन्मुक्तफीत्कारघोरम् ।
अम्भःशोषोपलम्भक्षणचुरुचुरुतोद्बुद्बुदस्त्यानफेनं
पारावाराम्बुपूरं चिकलयिषुरिषुः पातु पौलस्त्यजेतुः ॥ ६२ ॥

भ्रश्यन्निर्घातनश्यद्धृति तिमिरभराक्रान्तमुद्भ्रान्तलोकं
वातूलध्वस्तमूलक्षितिरुहमवनीकम्पसंपन्नशोकम् ।
तिर्यञ्चन्द्रार्कचर्याचकितमुनि जगत्कुर्वता येन पूर्वं
लक्ष्मीचक्रे समुद्रः स हरतु दुरितं रामभद्रीयबाणः ॥ ६३ ॥

शुष्यत्पाथोधिकुक्षिभ्रमदमितमहाग्राहवालाग्रघात-
क्षुभ्यत्कल्लोलगर्भप्रभवकलकलव्याप्तविध्यण्डमध्यम् ।
दिक्कोणव्यापिनव्यद्युमणिशतसमुद्भाव्यसाचिव्यभाव्य-
ज्वालामालाकरालं विपदपहतये रामबाणं स्मरामः ॥ ६४ ॥

पाथःक्राथासहाधःपतदुरुमकरत्रस्तपर्यस्तयादो-
निर्वृत्तावर्तचक्रभ्रमणविवलदुत्ताननिष्प्राणमीनम् ।
निष्टापत्रुट्यदब्जप्रकरपटपटध्वानसंरुद्धमब्धिं
यश्चक्रे प्राग्गिषुं तं खरमथनकराम्भोजभाजं भजामः ॥ ६५ ॥

उत्क्रामत्प्राणनक्राननबिलविगलत्प्राङ्गिगीर्णाम्बुमर्त्यं
धूम्यासंसर्गताम्यद्व्रजनिचरकुलत्रासमुक्ताधिवासम् ।

अन्योन्यश्लिष्टनष्टद्विरसनमनलज्वाललीनाभ्रजालं
कुर्वन्नम्भोधिमुर्वीदुहितृपतिशरः पातु नः क्षेमहेतुः ॥ ६६ ॥

संमुह्यत्सह्यकन्यं तरलितमुरलं जृम्भितातङ्कगङ्गं
सद्यःक्रन्दत्कलिन्दात्मजमवशलुठन्नर्मदातुङ्गभद्रम् ।
खेलज्ज्वालावलीढक्षुभितसरभसोद्वेलकल्लोलचक्रे
विक्रोशत्यम्बुराशौ रघुपतिविशिखः पातु मां यातुमाथी ॥६७॥

अन्योन्यश्लिष्टवीचीभुजलतमभितःकीर्णशैवालकेशं
लोलत्पद्मेक्षणान्तस्रवदमितमधुस्यन्दबाष्पानुबन्धम् ।
चक्रन्दुः सिन्धवो यन्मुखवलदनलज्वालतान्ते स्वकान्ते
सः श्रेयस्ताटकेयप्रमथनविशिखो यच्छतादिच्छतां नः ॥६८॥

वैडूर्यस्निग्धमुग्धद्युतिरमरधुनीमुख्यनारीपरीतो
रत्नस्रङ्मौलिरात्मप्रभवमणिगणालंकृतो रक्तचेलः ।
यस्मिन्प्राणान्तदण्डप्रणयिनि समुपागम्य रम्यैर्वचोभि-
र्भक्त्या तुष्टाव बद्धाञ्जलिपुटमुदधिस्तत्प्रभोरस्त्रमीडे ॥ ६९ ॥

अन्वञ्चज्जह्नुकन्याशिशिरकरतलामृष्टनिष्टप्तभाग-
स्तातप्रेमाप्तधन्वन्तरिकरकलितच्छिन्नगात्रार्द्रपट्टः ।
काङ्क्षन्नम्भोधिरन्तर्घनममृतरुचेरात्मजस्याङ्कपालिं
निन्ये यद्ग्रस्तमुक्तः कथमपि दिवसं तं भजे रामबाणम् ॥७०॥

अङ्कालंकारलङ्कापुरशिखरशिलाचक्रविक्रान्तवीर-
क्रूरक्रोधाट्टहासश्रवकुपितकपिक्ष्वेडिताम्रेडितानि ।
ज्यानिर्घोषेऽतिशय्य प्रवहति विहगात्रंहसा संहसन्तं
तं रक्षश्चक्षुरुष्णंकरणमधिरणं रामबाणं नमामि ॥ ७१ ॥

कृत्तं येनापतत्तद्रणशिरसि शिरः श्मश्रुलं रश्मिकेतोः
सुतघ्नश्च न्यपतद्भुवि दलितशिरा यज्ञकोपेन साकम् ।
भग्नं द्रागग्निकेतोरपि धरणिगतं शीर्षमाकार्षि कङ्कै-
र्लङ्कातङ्कैकहेतुः स शरपरिवृढः पातु सीताधिनेतुः ॥ ७२ ॥

सातङ्कामर्त्यसङ्घानभिलषितनिजालोकनं शोकनम्र-
स्वर्बन्दीनिर्भराश्रुस्नपितमषिरजोद्गीर्णपाथःकणार्द्रम् ।
उन्मीलत्केलिकोपाकुलमयतनयामात्रदृष्टप्रणामं
दाशग्रीवं किरीटं रणभुवि विकिरन्रामबाणः पुनातु ॥ ७३ ॥
वेगादाकाशवीथ्यामुपरि परिहरन्नभ्रवृन्दं[1] विभिन्द-
न्नाकर्षन्काककङ्कप्रकरमधिनभश्चक्रमुच्चैर्भ्रमन्तम् ।
दोर्दण्डः कौम्भकर्णः[2] कपिवरदलनप्रासदम्भोलिकेलि-
र्येन व्यालूनमूलः क्षितिमभजदयं त्रायतां रामबाणः ॥ ७४ ॥
निर्घातक्रूरपातध्वनिचकितजगद्भुग्नभूगर्भमग्न-
क्रोडावध्यङ्गपीडाकुलममरकुलोन्मुक्तहर्षाट्टहासम् ।
यत्कृत्ताभ्यां पदाभ्यां द्रुतमपतदधः कौम्भकर्णं शरीरं
तस्मादन्यं न मन्ये रघुवृषभशराद्रक्षणे दक्षिणं नः ॥ ७५ ॥
त्रस्तापावृत्तमत्तद्विपचकितललद्घुष्टतुङ्गोष्ट्रपृष्ठ-
भ्रश्यन्नैःसाणिकाशुत्रुटितपदपुनःसंध्यपारीणवैद्याम् ।
लङ्कां सुग्रीवविघ्रीकृतविवृतनसारन्ध्रभीमो न्यरुन्ध-
द्राङ्मूर्धा कौम्भकर्णो यदपहृतगलः पातु बाणः स नेतुः ॥ ७६ ॥
निष्पिष्टानल्परक्षःकपिकुलमसकृद्भूतले पातुकस्य
क्षिप्तोदञ्चद्विमानस्खलितसुरसुपर्यम्बरे चोत्पतिष्णोः ।
वृत्तं यत्कृत्तमूर्ध्नः क्षणमधिसमरं कुम्भकर्णस्य नृत्तं
भूता मामेति भीताः कथमपि ददृशुस्तं भजे रामबाणम् ॥ ७७ ॥
बाणा लूनाः सुराणामपि पिशितभुजो येन कङ्कच्छदाङ्क-
प्रेङ्खत्पुङ्खाभिरामा रणभुवि तरसामाकरा माकराक्षाः ।
नीतस्तातस्य पार्श्वे तदनु खरसुतोऽप्यस्त्रशस्त्रप्रवीण-
स्तेन सस्ताटकारेरिह वयमिषुणा केवलं सावलम्बाः ॥ ७८ ॥

---

१. 'परिसरन्नभ्रवृन्दं' इति स्थिते भव्यः पाठो भवेदिति भाति. २. 'कौम्भकर्णः कथमपि कपिभिर्विद्रुते दूरमद्रौ' इति पाठभेदो दृश्यते.

कोदण्डादुज्जिहानो नमदमरवधूसंघसंगीतकीर्तिः
प्रीणन्गीर्वाणलोकं यमिकुलसहितं तेजसा जृम्भितेन ।
रामस्यामित्रवर्गं मथितुमखिलमाबालमुत्साहपर्या-
णद्धोऽस्माकं शुभानि स्तबकयतु शरो वेगनिर्धूतमेघः ॥ ७९ ॥

निर्गच्छद्वैरिवर्गच्छलजलदकुलोन्मुक्तनाराचधारा-
विच्छेदाभिज्ञकङ्कच्छदजवपवनप्रेङ्खितक्रूरपुङ्खः ।
बाणो रामस्य शाणोपलनिशितशिखाधालधल्यावदात-
ह्रादिन्याख्यातशातक्रतवदुरितदुर्भिक्षयोगः पुनातु ॥ ८० ॥

मौर्वीटंकाररवर्वीकृतयुगविगमोद्भूतजीमूतशब्दै-
श्चापैरुद्भ्रान्तचामीकरमयशिखरैर्मुञ्चतोऽस्त्रप्रपञ्चम् ।
तूणैरक्षीणबाणैरविरहितवहान्सङ्घशो वीररामा-
न्संग्रामे दर्शयन्तं तमरिपरिषदे नौमि रामस्य बाणम् ॥ ८१ ॥

व्याकीर्णस्वर्णपट्टद्युतिविशददिशं वैरिधैर्यप्रणाडी-
लुण्टाकध्वानघण्टाघटितसदटानिं मण्डलीकृत्य चापम् ।
सङ्ग्रामे रामचन्द्रे सरति भुवि दिवि च्छिन्नभिन्नापविद्ध-
क्रव्यादव्याहताम्भोवहनिवहमहं भावये बाणराजम् ॥ ८२ ॥

आराद्धुं युद्धभूमिं निशितनिजशिखाकृत्तमत्तेभकुम्भ-
प्रश्च्योतद्रक्तनिश्चप्रचघुसृणरसालेपदत्तावलेपाम् ।
सोत्कण्ठः पुण्डरीकस्रजमसृजदरं खण्डितारिप्रकाण्ड-
श्वेतच्छत्रच्छलाद्यो हृदि सपदि स मे रामबाणोऽस्तु भूत्यै॥८३॥

साटोपाघातगाढत्रुटितपटुरटत्कङ्कटोद्धाटिताङ्ग-
क्रव्यादोरःकवाटभ्रमणलगदसृक्पङ्कभृत्कङ्कपत्रः ।
आकर्षन्नेकमाकस्मिकमिव तटितः खण्डमुच्चण्डवेगः
क्रीडन्नीडानपीडाव्यपनुदपनुदेदापदं रामबाणः ॥ ८४ ॥

---

१. अत्र प्रतिपादं नियतिप्रथमाक्षरसंकलनया 'को न संप्रीयते रामबाणस्तवे' इति स्रग्धरणीपादेभ्यो लभ्यते. २. ईडानाः स्तुवन्तो जनास्तेषामार्तिहारी.

कृत्तक्षिप्ताश्वकुक्षिस्रुतरुधिरमिलद्ध्रिकागृध्रगृध्री-
सङ्घानाघ्रातजङ्घाकरिककरिकरच्छेदविस्रंसिमांसा ।
चक्रे येनारिसेना विदलितनिपतद्दुष्टवीरास्यदष्ट-
स्कन्धक्रन्दच्छृगालभ्रमणकलुषिता रामबाणं तमीडे ॥ ८५ ॥

कृन्तद्गोमायुदन्तक्रकचकटकटात्कारघोरास्थिकूटं
कङ्कोरुत्रोटिटङ्कत्रुटितपटपटाकुर्वदुच्चण्डमुण्डम् ।
चक्रं यत्क्रूरशल्यक्रमणविगलितप्राणमासीदरीणां
तन्यान्मे भूमिकन्यासहचरविशिखस्तापनिर्वापणं सः ॥ ८६ ॥

कस्मैचित्कापि मैत्री निरुपधि दिदिशे [1]दाशमुख्याय येन
क्षेमं यत्संनिधाने समिति पृतनया दाशमुख्या यये न ।
तस्य श्रीराघवेन्दोररिचकितशचीदेवनानाशुगन्तं
भक्तान्कुर्वन्तमीडे सुलभसुखनदीदेवनानाशुगं तम् ॥ ८७ ॥

क्षीणौजःकौणपासृक्कणविकिरणतो द्राग्रणक्षोणिकोणं
शोणीकुर्वाणमुद्यद्रणरणकरण[2]द्रावणद्रावणघ्नम् ।
प्राणत्राणप्रवीणं प्रणतिचणनृणां प्रक्कणद्वेणुवीणा-
पाणिस्रैणवाणीगुणितगुणगणं रामबाणं प्रणौमि ॥ ८८ ॥

[3]कालीहर्यक्षकण्ठध्वनिभरपरुषं कुर्वतामट्टहासं
साटोपन्यस्तपादक्रमनमितभुवां भग्नशूलद्रुमाणाम् ।

---

१. दाशमुख्याय धीवरश्रेष्ठाय येन राघवेन्दुना इति प्रथमपादे. दाशमुख्या दशमुखसंबन्धिन्या यये प्राप्तम्. 'या प्रापणे'. कर्मणि लिट्. आत्मनेपदम्. नेति नञ्प्रतिषेधे इति द्वितीयपादे. अरिचकितस्य रावणाद्भीतस्य शचीदेवस्य महेन्द्रस्य नानाविधाः याः शुचः शोकाः तासामन्तं नाशप्रदमिति तृतीयपादे. सुखमेव नदी सुलभं सुखनद्यां देवनं विहारो येषां तान् सुलभसुखनदीदेवनान्; आशुगं बाणं तमिति यच्छब्दप्रतिनिर्देशः. २. रावणद्रावणघ्नं रावणं विद्रावयन्तमित्यर्थः. ३. अदसीयशृङ्गारतिलकभाणे—

'कालीहर्यक्षकण्ठध्वनिभरपरुषं कुर्वतोरट्टहासं
साटोपन्यस्तपादक्रमनमदवनि भ्राम्यतोर्मण्डलेन ।
निर्घातक्रूरमुष्टिप्रहतबृहदुरस्तारठात्कारघोरा
युद्धारम्भा हिडिम्बानिलसुतबलयोर्मल्लयोरुल्लसन्ति ॥ १४८ ॥' इति.

निर्घातक्रूरमुष्टिप्रहृतबृहदुरस्तारठात्कारघोरे
युद्धे निर्दग्धलङ्कं रघुपतिविशिखं नौमि रक्षःकपीनाम् ॥ ८९ ॥
तं वन्दे रामबाणं रजनिचरचमूः स्वां पुरीं यत्प्रभाभिः
[1]सालंकारामवाटीकत मदविधुरा बन्धुरागा विनेत्रा ।
वर्षित्रा येन चाथ ज्वलनमजनि न प्रापिता दौरवस्थ्यं
[1]सा लङ्कारामवाटी कतमदविधुराबन्धुरागा विनेत्रा ॥ ९० ॥
संस्पर्धारब्धयुद्धाभिमुखदशमुखक्रूरपादप्रचार-
न्यञ्चद्भूकुञ्चिताङ्घ्रिरसनवरसंप्रार्थितस्वप्रवृत्तिः ।
चापारोपाय कुप्यन्निव दिशि ददृशे यो विलम्बासहत्वा-
ज्ज्वालाजिह्वालवक्त्रः स दहतु महतीमापदं रामबाणः ॥ ९१ ॥
कल्पान्तोद्भूतवातभ्रमितजलधरोद्घोषगम्भीरगर्जे-
द्रक्षोनाथाट्टहासश्रवणसरभसोत्पुष्यदान्ध्ये फणीन्द्रे ।
येनार्चिर्वृन्दसंदर्शितविविधजगच्चक्षुषा दिक्षु साक्षा-
दक्षान्त्येवोदलासि क्षिपतु स विपदं क्षिप्रमैक्ष्वाकबाणः ॥ ९२ ॥
शार्दूलक्रोष्टुकोलश्वखरमकरहर्यर्क्षकाकोलकङ्क-
श्येनास्यानाशरेशभ्रमदलघुधनुश्चक्रमुक्तान्पृषत्कान् ।

---

१. सालंकाराम्, अवाटीकत, मदविधुरा, बन्धुरागा, विनेत्रा, इति प्रथमार्धे; सा, लङ्कारामवाटी, कतमत्, अविधुराबन्धुरागा, विनेत्रा, इति द्वितीयार्धे पदच्छेदः. यत्प्रभाभिः यस्य बाणस्य तेजसा हेतुना विनेत्रा विगतनयना अत एव मदविधुरा युद्धगर्वरहिता बन्धुषु रागो यस्याः सा बन्धुरागा। बन्धूनेवाभिलषन्ती न तु युद्धे शरीरत्यागमिति भावः । रजनिचरचमूः सालंकारां अलंकारैः रम्भास्तम्भतोरणमालिकादिभिः सहिताम् । रामबाणपतनात्पूर्वमिति भावः । पुरीं अवाटीकत । युद्धभूमिं परित्यज्य प्राप्तवतीत्यर्थः। 'टीकृ गतौ' । अवपूर्वात्ततो लङ् । आत्मनेपदम् । अथ तदनन्तरम् । ज्वलनं वर्षित्रा । तृषेस्तृन्नन्तादृतस्तृतीया । विनेत्रा शिक्षकेण । दुर्जनानामिति शेषः । येन बाणेन सा प्रसिद्धा लङ्काया आरामवाटी उपवनवाटी । वीनां पक्षिणां धूः विधुरा । 'ऋक्पूः—' इति समासान्तः । विधुरया पक्षिभरेण बन्धुरा मनोज्ञा अगाः वृक्षाः सा न भवतीति अविधुराबन्धुरागा सती । दग्धत्वादिति भावः। कतमत् कीदृशम् । डतमच्प्रत्ययान्तः किंशब्दः। दुःखरूपा अवस्था यस्याः सा दुरवस्था, तस्या भावः दौरवस्थ्यम् । तच्च बहुविधं पक्षिदाहवृक्षदाहलतादाहादिदुःखानां बहुत्वात् तं रामबाणं वन्दे.

तारोल्काधूमकेतुग्रहदहनतडिच्चन्द्रचण्डांशुवृत्त्या
छिन्दानं दाशरथ्याशुगमधिसमरं चिन्तये शोकशान्त्यै ॥ ९३ ॥
लीलाविक्षिप्तशूलाशनिमुसलगदामुद्गरप्रग्रहोग्रं
यस्मिन्नाश्चर्यचर्ये कवलयति बलादात्मनोदस्तमस्त्रम् ।
पौलस्त्यः श्वासवेगग्लपितरदपटश्रीर्निशश्वास शश्व-
त्तस्मै विस्मेरविद्याधरनयनकृषे नौमि रामाशुगाय ॥ ९४ ॥
क्रुध्यत्पौलस्त्यहस्तभ्रमितधनुरपश्लिष्टघोरास्त्रसृष्टा-
न्क्ष्वेलज्वालाजटालान्पिहितदशफणामण्डलान्कुण्डलीशान् ।
हत्वा संवर्तमेघस्फुरदुरुगरुदास्फालनिर्धूतमूर्ध्नो
विक्रामन्व्योम्नि चक्रायुधरथवपुषा पातु रामस्य बाणः ॥ ९५ ॥
हुंकारत्रस्तविश्वत्रयममरपतिप्रार्थितभ्रूनिदेशं
प्रेम्णा संचारिताक्षं मुहुरपि च परस्त्रैणतुङ्गस्तनेषु ।
मध्वासाराद्रकूर्चं मदनकलमयापत्यपीताधरोष्ठं
मूर्धानं निर्धुनानो युधि दशशिरसः पातु मां रामबाणः ॥ ९६ ॥
सद्यःकृत्तापविद्धत्रिदशपथसमाकीर्णपौलस्त्यमूर्ध-
द्राघीयःश्मश्रुपाशग्रथितपदवलद्गृध्रसंपातरौद्रे ।
युद्धारम्भे सुशिक्षावशदुरवगमादानसंधानमोक्ष-
स्ताद्दक्षो रामबाणो वितरतु नितरां भव्यमव्याहतं नः ॥ ९७ ॥
कृत्तभ्रश्यद्दृप्यद्दशवदनशिरःपिण्डतालीफलाली-
मुद्यत्काकोलकोलाहलमुहुरनुहुंकारिगोमायुभीमाम् ।
कुर्वन्सङ्ग्रामभूमिं कुतुकघनमनश्चारणस्त्रैणमुक्त-
प्रभ्रश्यत्पारिजातप्रसवसुरभिलः पातु रामस्य बाणः ॥ ९८ ॥
सङ्ग्रामे[1] रूपमानादमरभयवहाद्विन्ध्यमेरूपमाना
निर्यन्नीराक्षसीसाकृतिरदनमुखी वाहिनी राक्षसी सा ।

---

१. रूपमानात् रूपप्रमाणात् । विन्ध्यमेरूपमाना विन्ध्यमेरुतुल्या । उत्तुङ्गशरीरेत्य-र्थः । रक्षोनिष्ठमुत्तुङ्गशरीरत्वं तद्वाहिन्यामारोपितम् । निर्यन्नीरे शोकेन विगलद्बाष्पे अ-क्षिणी येषां तानि निर्यन्नीराक्षाणि । सीसाकृतयः श्वेततया सीसतुल्यरूपा रदना येषां

दृष्ट्वा तत्रास कृत्तं दशवदनशिरो येन तत्रासकृत्तं
बाणं वन्देऽवमान्यं भगवत उदयद्वैभवं देवमान्यम् ॥ ९९ ॥
हाहाकुर्वाणसर्वाशरनिकरमविस्रम्भिणो जम्भजेतु-
र्भृत्यैरभ्येत्य दृष्टं मुदितकपिकुलास्फालितोद्धूतवालम् ।
आहृत्य श्येनकङ्कावलिदलितभुजाभ्यन्तरं स्यन्दनान्ता-
ल्लङ्केशं भ्रंशयन्तं रघुपतिविशिखं नौमि रोगोपशान्त्यै ॥ १०० ॥
यत्पत्रं तत्सवित्रीभवति हनुमतो नीलसुग्रीवसर्गो-
वायत्तौ यत्फले चानिशमिनशशिनौ गच्छतो यच्छरीरे ।
अन्यत्किं यद्वरिम्णि त्रिपुरहरधनुर्दुग्धसिन्धोश्च मन्थः
पौलस्त्यप्राणहारी युधि भवतु स मे रामबाणः शरण्यः॥१०१॥
आदौ मारीचमात्रप्रचलितचरणन्यासनिर्वृत्तरेखं
पश्चात्क्रामत्खराश्वद्विरदरथभटाक्रान्तिवैपुल्यभाजम् ।
निस्तीर्णे कुम्भकर्णप्रभृतिभिरगमद्बन्धुभिः स्पन्दितैः प्रा-
ग्यत्कृत्तः पङ्क्तिवक्त्रो यमनगरपथं रामबाणं तमीडे ॥ १०२ ॥
कल्याणं रामबाणः कलयतु भुवनातङ्कनिस्तन्द्रलङ्का-
नाथस्वच्छन्दबन्दीकृतरुददमरस्त्रैणनिर्मोक्षदक्षः ।
निर्विघ्नारम्भरम्भाकुचकलशपरीरम्भसौख्योपलम्भ-
स्निह्यज्जम्भारिसंभावितविनतजनत्राणचातुर्यधुर्यः ॥ १०३ ॥
यैश्चण्डीजानिशैलग्रहणकृतधियः खण्डितेन्द्रानिलाग्ने-
र्लङ्कानाथस्य कण्ठानहह कदलिकाकाण्डकर्तं चकर्त ।

---

तानि सीसाकृतिरदनानि । एवंविधानि मुखानि यस्याः सा तथोक्ता वाहिनी । राक्षसी रक्षःसंबन्धिनी । सेति प्रसिद्धौ । तत्रास त्रस्ता बभूव । कृत्तं छिन्नम् । तत्र तस्मिन्सङ्ग्रामे । असकृत् बहुकृत्वः तं बाणं वन्दे नौमि । अवमादधमादन्यं उत्तममित्यर्थः । उदयद्वैभवं उद्यत्प्रभावम् । देवानां मान्यं पूज्यं देवमान्यम् । इति क्रमेण पदच्छेदः पदार्थश्चावगन्तव्यः.

१. 'यस्य पत्रेषु पवनः फले पावकभास्करौ । शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥' इति रामायणे. २. निरोष्ठ्यवर्णश्लोकः.

हर्षेणाशेषगीतं त्रिजगति नितरां दृश्यते यस्य तेजः
स: श्रेयस्ताटकारेः करतलकलितः सायकः साधयेन्नः ॥१०४॥

[1]भास्वद्भानुप्रभावाभिभवपटुरुरुस्वप्रभाभिर्विधून्व-
न्सौवर्गोपप्लवौघोद्भवमृजु सुमनोभावसुप्रापरूपः ।
पापव्यालोपमायुर्विभवमपि मधुस्वादुवाग्गुम्फमावि-
ष्कुर्वन्प्रह्वेषु बाणो भवतु शुभवहोऽसौ सुबाहुद्विषो वः ॥१०५॥

स्वच्छन्दं यश्चकार प्रबलनिशि[2]चरव्यूहमारी चलाव-
स्थानां लङ्कासमृद्धिं प्रतिभटपरिभाव्यूहमारीचलावः ।
बाणं तं प्राप्तसीतारमणकरसरोजं भजे त्रासितेन
ख्यातस्तोत्रे दशास्येऽपि च कृतकदनं जम्भजेत्रा सितेन ॥१०६॥

[3]साभावज्ञानसत्रापहतिनिरतभिल्लोकरक्षाविलासा
सालाविक्षारकल्लोलजलधितनुमग्रामसक्ता सदासा ।

---

१. सर्वौष्ठ्यवर्णश्लोकः. २. निशिचराणां व्यूहं समूहं मारयितुं शीलमस्यास्तीति निशिचरव्यूहमारी । चलं अवस्थानं यस्यास्तां लङ्कासमृद्धिम् । प्रतिभटान् शत्रून् परिभवितुं शीलमस्यास्तीति प्रतिभटपरिभावी । तादृश ऊहो बुद्धिविशेषो यस्य सः । तथोक्तं मारीचं लुनातीति प्रतिभटपरिभाव्यूहमारीचलावः । प्राप्तं सीतारमणकरसरोजं येन सः तथोक्तम् । भजे नमस्कुर्वे । त्रासितेन तर्जितेन । जम्भजेत्रा इन्द्रेण । सितेन बद्धेन । 'षिञ् बन्धने' क्तः । इति पदच्छेदः पदार्थश्चावगन्तव्यः. ३. सभासंबन्धिनः साभाः सभायोग्याः । महान्त इत्यर्थः । तेषामवज्ञानं अवमानम् । सत्रस्य यज्ञस्य अपहतिः विघातिः । साभावज्ञाने सत्रापहतौ च निरतास्तत्परा मारीचादयः तान्भिनत्तीति साभावज्ञानसत्रापहतिनिरतभित् । लोकरक्षैव विलासो यस्याः सा तथोक्ता । 'इषुर्द्वयोः' इत्यमरोक्तेरिषुविशेषणस्यापि स्त्रीलिङ्गता । सालाः सप्तसालाः, अविः शैलः, क्षारकल्लोलजलधिः लवणोर्मिसमुद्रः, तेषां तनुषु मज्जतीति सालाविक्षारकल्लोलजलधितनुमक् । रामसक्ता रामसंबन्धिनीत्यर्थः । सदा आसो गतिर्यस्याः सा सदासा । असतेर्गत्यर्थादास इति भावे घञ् । पत्रांशे वायुरूपेत्यर्थः । सादो विशरणम् । नाश इत्यर्थः । तेनासक्ता असंबद्धानिला । आकाशरूपेत्यर्थः । समुज्ज्वलमग्रं यस्याः सा समग्रा । अग्निसूर्यात्मकाग्रत्वादिति भावः । 'यस्य पत्रेषु पवनः फले पावकभास्करौ । शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥' इति रामायणे । तामसघ्नाजिरासा । तामसः तमःप्रधानत्वाद्रावण उच्यते । तं हन्तीति तामसघ्नी । 'अमनुष्यकर्तृके च' इति हन्तेष्टः । न विद्यते रामस्य

सादासक्ता समग्रा दिशतु शुभमिषुस्तामसन्नानिरासा
सारानिघ्ना समस्ताशरभटनिकरत्रासनज्ञावभासा ॥ १०७ ॥
पायात्स्वीयाभिघातक्षतदशमुखदोर्मध्यमन्दोष्णनिर्य-
द्रक्तात्यन्तोपयोगश्रमभरित इव स्वामिहस्ते निषण्णः ।
प्रक्रान्तस्तोत्रशक्राम्बुजभवगिरिशप्रष्ठसौवर्गवर्ग-
स्वैरस्वाराज्यभोगप्रणयनसुभगं भावुको रामबाणः ॥ १०८ ॥

इति[1] श्रीरामभद्रदीक्षितविरचितो रामबाणस्तवः संपूर्णः ।

---

## कविवरनरहरिविरचितं[2]

## श्रृङ्गारशतकम्[3] ।

शब्दब्रह्ममयी चकास्ति मुरली यत्राद्भुता मोहिनी
यत्रास्ते शुकनारदादिनिहितं प्रेमैव पीताम्बरम् ।
यत्राद्वैतसमाधिमग्नमनसं निद्रामयी श्यामता
गोपीलोचनचुम्बितं नरहरेः क्षेमाय धामास्तु तत् ॥ १ ॥

---

सकाशान्निरासो यस्याः सा अनिरासा। शत्रून् हत्वा पुनस्तूणीरप्रवेशादिति भावः । तामसन्नी चासौ अनिरासा चेति कर्मधारयः । पूर्वपदस्य पुंवद्भावः । तामसन्नानिरासा । सा प्रसिद्धा । आरानिघ्ना अरीणां समूहः आरं तस्यानिघ्ना अनधीना। 'अधीनो निघ्न आयत्तः' इत्यमरः । शत्रुभिर्वशीकर्तुमप्यशक्ता । 'एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा' इति रामायणोक्तमिति भावः । समस्ताश्च ते आशरभटा राक्षसभटाश्च तेषां निकरस्य यत्त्रासनं तर्जनं तस्य ज्ञः अवभासः ज्वाला यस्याः सा । स्वज्वालादर्शनमात्रेण राक्षसास्त्रसन्तीति भावः । पद्मबन्धोऽयं श्लोकः.

१. इमौ रामचापस्तव-रामबाणस्तवौ सटिप्पणकौ तञ्जौरनगरवासिभिः टी. एस्. कुप्पूस्वामीशास्त्रिभिः प्रेषितौ, रामबाणस्तवस्य प्रथमावधि त्रिंशतिश्लोकपर्यन्तं च त्रिचिनापल्लिवासिभिः ज. से. नटेशशास्त्रिभिः प्रेषितम्, इति तेषामुपकारगौरवं बिभृमः. २. अयं हि कविवरनरहरिः कदा कतमन्महीमण्डलं मण्डयामासेति न निश्चितम्. परंतु स्वकीयेऽस्मिन्नेव शृङ्गारशतके 'श्री**कालिदास**कवितासुकुमारमूर्ते **बाणस्य** वाक्यमिव मे वचनं गृहाण । **श्रीहर्ष**काव्यकुटिलं त्यज मानबन्धं वाणी कवे**र्नरहरे**रिव संप्रसीद ॥ ८९ ॥' इति श्लोके बाणश्रीहर्षवर्णनेन ताभ्यामर्वाचीनः प्रतीयते. ३. अस्यादर्शपुस्तकं तु महामहोपाध्यायस्वर्गवासिपण्डितवरदुर्गाप्रसादशर्मभिरेव संवत् १९४२ मध्ये काशीनाथशर्मणा लेखयित्वा स्वकीयपुस्तकसंग्रहे स्थापितमासीदिति बोध्यम्.

ये केचित्सुधियः सदुक्तिनिधयः संतुष्टवाग्देवता-
स्तेषां काव्यरसामृतानि वदने नित्यं वसन्त्येव हि।
तेऽपि श्रोत्रपुटेन वाङ्मयरसं पातुं सतृष्णाः सदा
तस्मादेष रसाधिको नरहरेः काव्यश्रमः सार्थकः॥ २॥

कालिन्दीजलकेलिकौतुकवती नीलाञ्जनश्यामला
चञ्चत्केकिकलापकोमलतनुर्गौराङ्गि वेणी तव।
वाचाटैः कविभिस्त(स्त्व)दीयसुषमा बाले कथं वर्ण्यतां
वाग्मिश्रेणिशिरोमणिर्नरहरिर्यद्वर्णने मुह्यति॥ ३॥

बाले वीत(चीन)पटाञ्चलेन पिहिता भीमा प्रलम्बा भृशं
श्यामाङ्गी मणिमण्डिता फणवती वेणी भुजंगी तव।
दष्टोऽयं तरुणस्तया नरहरिस्त्वं मञ्जुहासामृतै-
रेनं जीवय सत्वरं शिवशिव प्राणानसौ त्यक्ष्यति॥ ४॥

मुक्तामण्डितकर्णशुक्तिरुचिरे बिम्बोष्ठरत्नाकरे
पर्यन्तस्थितनीलकुन्तलवने लावण्यकल्लोलिनि।
चार्वङ्ग्या मधुरस्मितामृतनिधौ शोभासमुद्रे मुखे
वत्तु(चक्षु)र्मीनमनोहरे नरहरेश्चेतो निमग्नं सखि॥ ५॥

दंपत्योर्ननु मौनमेव सुदृढं नामग्रहो न द्वयो-
र्व्रीडा हन्त विलोकने नरहरे तत्रापि तिर्यग्गतिः।
सांमुख्ये मुखमावृणोति वनिता भ्रूभङ्गिनी सर्वदा
प्रत्यक्षो रण एव केलिसमये वैरं नु तत्प्रेम नु॥ ६॥

स्मेरास्ये कलया कयापि तरुणे लीलारसप्रार्थके
नम्रास्या करवारिजेन वलयं व्यावर्तयत्यङ्गना।
मत्कण्ठे मृदुसुन्दरे सवलयं बाहुं निधेहीत्यमुं
भावं तस्य महाकविर्नरहरिर्जानाति नान्यो जनः॥ ७॥

रक्तान्येव रदक्षतानि वदने गात्रेऽपि रक्ता पटी
रक्तान्येव नखक्षतानि हृदये रक्ताः कटाक्षोर्मयः।

रक्तोऽयं सविशेषमेव दयितो नित्यानुरक्ता वधू-
र्यूनो रागरसात्मकं नरहरे रागाद्वयं दृश्यते ॥ ८ ॥

मानो मुक्तिमुपागतः प्रथमतः पश्चान्मिलच्चेतसो-
र्मौनं मुक्तिमुपागतं नरहरे मुक्तिं गता कञ्चुकी ।
नीवी मुक्तिमुपागता रतिरसे मुक्तिं गताः कुन्तला
मुक्तिक्षेत्रमिदं महत्परिचितं मुक्तेः सुखं रागिणा ॥ ९ ॥

आलापे मधुरस्मितानि तनुते गृह्णाति कण्ठस्थलीं
तल्पं कल्पयति स्वयं नरहरे सुस्निग्धमालोकते ।
आश्लेषे मृदुसीत्कृतानि कनुते(?) चाटूनि रम्ये रते
क्रीतोऽहं कतिधा न किं तदपि मां क्रीणाति लीलाशतैः ॥१०॥

अग्रे नृत्यति हावभावचतुरं नेत्रद्वयं चञ्चलं
पार्श्वे कङ्कणकिङ्किणीप्रभृतयो वादित्रमातन्वते ।
गायन्ति भ्रमराः सपुष्पकबरीसौरभ्यलुब्धा इमे
रामे शंसति कौतुकं नरहरेस्तौर्यत्रिकं ते तनुः ॥ ११ ॥

कान्तिः पावकसंनिभापि सुखदस्पर्शा यथा चन्द्रिका
वक्त्रा(क्त्रे) वाक्यपरम्परा नरहरे पीयूषधारानिधिः ।
अत्यन्तं कठिनौ तथापि हृदयानन्दाय वक्षोभवौ
दृक्पाता निशिताः शरा इव परं पुष्पाञ्जलिश्रेणयः ॥ १२ ॥

दूरीकृत्य दुकूलमन्त(म्ब)रवरं गाढान्धकारे गृहे
संश्लिष्टैव दुकूलकोमलतनुः सर्वात्मना सुन्दरी ।
गात्रं नाम दुकूलमेव सुदृशस्तेनामुना हेतुना
संभ्रान्तस्य दुकूलगो नरहरेर्नास्तं गतः संशयः ॥ १३ ॥

केचित्क्रूरकटाक्षबाणनिहताः संपातिता भूतले
केचिद्भाषणमाधुरीहृतधियस्तिष्ठन्ति मोहं गताः ।
ये केचित्प्रपलायितुं कृतधियो जालेन ते यन्त्रिता
बालेयं स्मरदेवता नरहरे आखेटकं खेलति ॥ १४ ॥

अक्षान्मुञ्चति वल्लभे वलयति स्निग्धान्कटाक्षानियं
दायं स्थापयितुं नतस्य वदनं संस्तूय संचुम्बति ।
सारीं मारयति प्रिये रसभृता भावेन सीत्कारिणी
नारी सारसलोचना नरहरे सारीफलैः खेलति ॥ १५ ॥

चित्रे कौशलमागता कृतवती पत्रे प्रियस्याकृतिं
प्राणेशस्य मुखं निपीय सुखदं भूयोऽपि संचुम्बति ।
उद्विग्ने मकरध्वजे मुहुरियं कण्ठग्रहायाकुला
संतापेन समन्विता नरहरे संमूर्छिता दृश्यताम् ॥ १६ ॥

विश्लेषज्वरपीडितान्नरहरे संतापयत्युच्चकै-
र्दुःखं यान्ति यथा यथा विरहिणो मारस्तथा मोदते ।
वामाङ्गीकृतशैलराजतनयं पश्यन्भवं भस्मसा-
ज्जातोऽयं स्वयमेव भूतपतिना नायं कृतो भस्मसात् ॥ १७ ॥

न्यस्ताः कङ्कतिकापथि प्रणयिना भूयोऽपि कृष्टाश्च ते
निम्नत्वं न हि यान्त्यमी नरहरे हर्षं गताः कुन्तलाः ।
वेणी नाम कथं घटेत रमणी बन्धाय जातोद्यम-
स्तत्प्रेम्णा शिथिलीकृते भुजयुगे बन्धः कथं सिध्यतु ॥ १८ ॥

नेयं पश्यति मां तथापि सदयं संपश्यति भ्रूयुगं
मौने तिष्ठति मानिनी तदधरः संभाषते मां प्रति ।
गाढाश्लेषविधिं करोतु न वधूर्वक्षस्तु रोमाञ्चितं
हासं नैव तनोतु हे नरहरे नीवी हसत्युच्चकैः ॥ १९ ॥

वामाङ्गीवदने विलोचनमृगद्वन्द्वं मया वीक्षितं
तेनैतन्मुखचन्द्र एव सुमते सत्यो मृगाङ्कः किल ।
चन्द्रे नास्ति मृगस्ततो नरहरिस्तर्कान्वितं भाषते
चन्द्रे चन्द्रपदप्रसङ्गवशतो जाता मृगाङ्कप्रथा ॥ २० ॥

वामांसे लुलितः किरन्परिमलं बन्धश्लथः कुन्तलो
निद्रापाटलघूर्णिते स्मरसुखध्यानालसे लोचने ।

बिम्बोष्ठो नवलाञ्छनः सरभसं रोमाञ्चितावञ्चितौ
वक्षोजौ नखलेखया नरहरेरानन्दमातन्वते ॥ २१ ॥

भास्वत्कुन्तलभारसौरभमिलद्भृङ्गालिझङ्कारकै-
र्लीलान्दोलितबाहुकङ्कणरणत्कारप्रकारैरपि ।
उद्दामस्मरकेलिकौतुकचलन्मञ्जीरमञ्जुस्वनैः
सीत्कारैर्मृदुसुन्दरं नरहरे बालारतं राजते ॥ २२ ॥

कोणे क्वापि दिशोर्भृशं नरहरे तारुण्यलक्ष्मीभृतो
वक्षस्यम्बुधरस्य संभ्रमवतीमुद्वीक्ष्य विद्युल्लताम् ।
तत्कालस्मरलोलकाञ्चनतनुर्धन्योरसि प्रेयसी
गङ्गावारितरङ्गिता हिमरुचो लेखेव सा खेलती ॥ २३ ॥

गम्भीरोऽपि समुत्सुको गुरुजनः शोभां नवामीक्षितुं
यात्यायाति मुहुर्मुहुर्नरहरे स्मेरः सखीनां गणः ।
वेषः सर्वरहस्यभावपिशुनो जाताः प्रकाशा दिशः
सिद्धिं यातु कथं मनोहरतनोः केलीगृहान्निर्गमः ॥ २४ ॥

चातुर्येण चकोरचञ्चलदृशा नूनं दृशां विभ्रमैः
सान्द्रस्नेहरसालसैर्नरहरे रागी वशं प्रापितः ।
शय्याभूषणभोजनेषु विरसः संयोगचिन्तातुरः
सर्वो विस्मृत एव देहरचनां शून्यं मनो वर्तते ॥ २५ ॥

आदर्शे वदनं प्रियस्य वदनं संयोज्य संवीक्षितं
सद्यः संमिलितं स्मितैर्नरहरे हर्षादुभाभ्यामपि ।
प्राणेशस्तु गतो विदेशमधुना मत्पातकैर्दारुणै-
रादर्शस्य किमु प्रयोजनमिति द्वेषेण दूरीकृतः ॥ २६ ॥

त्वं मां मुञ्च दयां विधेहि विरहेत्यालप्य वामभ्रुवा
विश्लेषाय समर्पिता नरहरे स्थूलाश्रुमुक्तावली ।
मूर्खः प्राणपतिर्विदेशरसिको धाम स्मरत्येव न
प्राणानेव जिघृक्षुरेष स कथं दानादिना शाम्यति ॥ २७ ॥

ज्वालाभिर्ज्वलितं जगत्त्रयमिदं मध्यं दिने मूर्छिता
यान्त्यायान्ति न मानुषा नरहरे चण्डो रविर्दीप्यते ।
कासारे किमु चक्रवाकमिथुनं विश्लिष्टमालोक्यते
कौमुद्यामिति संस्थिता विरहिणी व्यामोहमाविन्दति ॥ २८ ॥

संलापावसरे स्फुटं नरहरे दृष्टं शिरश्चालनं
दंपत्योर्वचने कदाचन मुदा हुंकारमाख्याति च ।
तेनायं पिशुनस्तृतीयमुचितं नैव द्वयोरावयो-
र्दूरीकृत्य सखीजनं वनितया दीपोऽपि निर्वापितः ॥ २९ ॥

पूर्वं तु स्नपितं विलोकनसुधाधाराशतैः शीतलैः
पश्चाच्चन्दनचर्चितं नरहरे मुक्ताक्षतैरर्चितम् ।
पुष्पैः पूजितमेव शंभुयुगलं किंतु स्फुरत्पाणिजै-
र्दन्ताश्चन्द्रकलाः शिवप्रियतमास्तत्पूजनं पूजनम् ॥ ३० ॥

अस्या नीलसरोजरम्यनयने नीलं यथैवाञ्जनं
जात्या चन्दनशीतले स्तनतटे श्रीखण्डलेपो यथा ।
गात्रे काञ्चनपत्रसुन्दरतरे भूषा यथा काञ्चनी
बिम्बोष्ठेऽपि तथा न किं नरहरे ताम्बूलरागप्रभा ॥ ३१ ॥

कुर्वन्नेव महोत्सवं नरहरे कामाधिकैः संभ्रमैः
कामिन्यै मिलनस्य पृच्छति सुखं प्राणेश्वरः कौतुकी ।
वक्तुं नार्हति लज्जया परवशा संमीलयन्ती दृशौ
कर्णे तस्य तु किङ्किणीकलरवस्तस्याः सुखं शंसति ॥ ३२ ॥

नाथं नन्दयितुं सखे नरहरे माणिक्यमञ्चे स्थिता
वीणां वादयति स्म विस्मयमयीं जेगीयमानाङ्गना ।
गाने स्नेहसमन्वयः समधिको वीणाक्कणे नास्त्यसौ
तुल्यत्वे सति तारतम्यमनयोः सुज्ञेन विज्ञायते ॥ ३३ ॥

लावण्यैकनिधे विनोदजलधे मीनाक्षि मन्दस्मिते
नानाविभ्रमनायके नरहरिर्दासानुदासस्तव ।

आज्ञाकारिणि किंकरे परिसरे प्राणान्तपर्यन्तिनी
दुष्प्रेक्षा दृढमानबन्धरचना रामे किमर्थं कृता ॥ ३४ ॥
उच्चैर्मन्दिरमुज्ज्वलं समुदितः पूर्णः पुरश्चन्द्रमाः
प्रेमार्द्रस्तरुणः सखे नरहरे रूपाधिका नायिका ।
पर्यङ्के स्फुटफेनदुग्धधवले मञ्जुस्मितालंकृता
लीलाः साधु निपीय हर्षजलधौ मग्नः सखीनां गणः ॥ ३५ ॥
पूर्वं चारु निरीक्ष्य पाणिकमलेनामृश्य संबोधितः
पश्चात्खेलनलीलया मृदुपदैः सस्नेहमध्यापितः ।
क्रीडापञ्जरयन्त्रितो नरहरिर्नक्तं यथा लालितः
क्रीडापञ्जरयन्त्रितो वनितया कीरस्तथा लालितः ॥ ३६ ॥
चन्द्रे लोचनगोचरे सुखनिधे सा निश्चिनोत्यामनं
कञ्चुक्या हृदि संवृतप्रणयिनं निःसंशयं श्लिष्यति ।
कीरे कुर्वति संकथां प्रियतमं संभाषते संभ्रमैः
पद्मं चुम्बति चेन्मुखं नरहरेश्चुम्बत्यसौ तन्मयी ॥ ३७ ॥
तेना····न्वय·······································
···········स्य कवेरिवोक्तिरबला किं ते रसं दास्यति ।
संप्राप्तानुनया विलासरसिका शृङ्गारहाराञ्चिता
साहित्येन समन्वि[ता] नरहरेर्वाणीव सा सेव्यताम् ॥ ३८ ॥
जानाम्येव यथा सुखं सुखनिधेः सांनिध्यतो लभ्यते
तादृङ् नास्ति सुखं सखे नरहरे लोकेशलोकेऽपि न ।
किंतु प्राञ्जलिरेष नम्रनयनो विज्ञापनामाचर-
न्कान्तश्चाटुचमत्कृतानि तनुते मानस्तदर्थो मम ॥ ३९ ॥

अथ स्रग्धरा—

केयं काश्मीरगौरी सकुसुमयमुनावर्तकान्तालकान्त-
ग्रन्थिः पूर्णेन्दुवक्त्रा नवमृगनयना पक्वबिम्बाधरश्रीः ।
मन्दस्मेरा सुपीनस्तनभरविनमन्मुष्टिमेयोदरश्रीः
श्रोणिप्राग्भारगुर्वी नरहरिहृदयानन्दिनी मन्दमेति ॥ ४० ॥

भाले कस्तूरिकाभो वदनसरसिजे नीलचैलाव(नाञ्च)लाभः
कण्ठे काचव्रजाभः कुचकलशयुगे कञ्चुकीसंगमाभः ।
श्रोणीशैलेऽम्बुदाभो नरहरिमनसि प्रेमपाशप्रकाशो
लक्ष्मीं धत्ते नवीनां दिशि दिशि लुलितः कामिनीकेशपाशः ॥ ४१ ॥
रक्ताम्भोजं हसद्भिः करचरणतलैर्लोचनश्यामपद्मा
हेमाम्भोजाभिरामं मुखमनुदधती बालरोलम्बलक्ष्मीम् ।
नीरक्रीडानुरक्तस्मरनिहितघटद्वन्द्ववक्षोभवाङ्का
पुण्यैरालोकितेयं नरहरिहृदयानन्दिनी रूपवापी ॥ ४२ ॥
चन्द्रश्रीतस्करं तन्मुखमथ नयने तस्करे मीनकान्तेः
कुन्दश्रीतस्करेयं रदरुचिरधरस्तस्करो बिम्बभासः ।
बिल्वश्रीतस्करौ द्वौ वपुरपि निखिलं तस्करं हेमलक्ष्म्या
वस्त्रैराच्छ दितोऽयं कलय नरहरे तस्कराणां समूहः ॥ ४३ ॥

अथ मन्दाक्रान्ता—

तामुत्तुङ्गस्तनभरनमन्मध्यभागामरालै-
रासिञ्चन्तीं नयनवलनैः कामिकामाङ्कुरालीम् ।
पूर्णप्रेम्णा रहसि मिलितामुच्चरोमाञ्चरम्यां
कामप्यतः(न्तः) कविनरहरे कामिन(नीं) कामयामि ॥४४॥
नासाभित्तिश्रवणविवरैर्वारितं दीर्घभावा-
न्नेत्रद्वन्द्वं चतुरचपलं कस्य नाकर्षणाय ।
''''स्ताम्रं दशनवसनं कं न कुर्याद्वशं वा
हासोल्लासः[''''']नरहरे कस्य नो विस्मयाय ॥ ४५ ॥
नम्रं कृत्वा मुखहिमरुचिं पद्मपत्रेक्षणायाः
संपश्यन्त्याः स्फुरितमधुरं नीविबन्धं स्मितेन ।
लीलारङ्गं कविनरहरौ याचमाने नितान्त-
स्तूष्णीं भावः कथयति सखे लालसं खेलनेषु ॥ ४६ ॥

अथार्याः—

चौरसुजनप्रसङ्गे बन्धश्चौरस्य नरहरे नियतः ।
मदनमहीपतिराज्ये चौरैः सुजना निबध्यन्ते ॥ ४७ ॥

तृष्णातरलितचक्षुः पश्यति सरसीं यथा पथिकः ।
एवं यदि सरसी स्यान्नरहरिरुपमां ब्रवीतु दम्पत्योः ॥ ४८ ॥

रमणगृहं प्रति रमणं नयनं नयति स्म नम्रनयनायाः ।
नयनेन नयनमस्या नयनपदं नरहरे भजति ॥ ४९ ॥

आ ईषन्ननुवाणीमाननमङ्गीचकार परिरम्भे ।
तेनैवाननमस्या आननमिति नरहरिर्वदति ॥ ५० ॥

परिपूर्णचन्द्रलक्ष्म्या यदास्यते मुख्यमास्यं तत् ।
तव तन्वि तादृगास्यं नरहरिरन्यत्र लक्षणां वदति ॥ ५१ ॥

नरहरिहृदय इवास्या विनिमज्जन्त्या रसाधिके सरसि ।
दर्शितरङ्गतरङ्गः प्रससार निरन्तरः स्नेहः ॥ ५२ ॥

त्वं हावभावसहिता नरहरिकवितेव मञ्जुलं वदसि ।
श्लेषे न कुरु विलम्बं श्लेषो हि सुखार्णवः सुमुखि ॥ ५३ ॥

चन्दनघनमलयद्वयसौरभलाभाय भुजगवनितेयम् ।
मृदु चलति नाभिकुहरान्नरहरिराख्याति रोमराजिरिति ॥ ५४ ॥

........................................................ ।
सुखमिति वक्तुं युक्ते मुखमिति स लिपेर्विपर्यासः ॥ ५५ ॥

नरहरिकरेण गलिते नीवीबन्धे सुवर्णवर्णायाः ।
हरभस्मितोऽपि मदनो जन्म नवीनं पुनः प्राप ॥ ५६ ॥

क्षीणतया न हि खिद्यति नरहरिरभ्यागतः स्वगृहे ।
परिचेष्यते कथं मामिति वनिता दुःखिता भवति ॥ ५७ ॥

पञ्जरयन्त्रितचञ्चलचकोरचर्याञ्चितं चक्षुः ।
भवनगवाक्षगताया नरहरिरवलोक्य विस्मयं विशति ॥ ५८ ॥

अथ प्रहर्षिणी—

बिम्बोष्ठे करच[र]णे सुरक्तवर्णा रोमालीचिकुरकटाक्षकृष्णकान्तिः ।
अत्यच्छा स्मितविषये विमोहनीयं निर्णीता नरहरिणा मुकुन्दमाया॥५९॥

बध्नन्ती करकमलेन केशपाशं पश्यन्ती मणिमुकुरे मुखारविन्दम् ।
मीनाक्षी कुटिलकटाक्षखड्गधारानिक्षेपान्नरहरिमञ्जसा जघान ॥ ६० ॥

चार्वङ्ग्या नरहरिराहतो विहारे मञ्जीरक्वणितवता पदाम्बुजेन ।
संसिक्तः स तु सुधयैव मोदमानः प्रागल्भ्यं द्विगुणमवाप खेलनेषु॥६१॥

धम्मिल्लस्थलविगलत्प्रसूनजाला कस्तूरीतिलकलसद्विशालभाला ।
एकान्ते नरहरिसंगमे रसाला बाला [सा] मदनकलाविलासशाला॥६२॥

अथ मालती—

निरवधिरतिरङ्गप्रेमरोमाञ्चिताङ्गी
कतिपयरदरेखारम्यबिम्बाधरश्रीः ।
स्फुरति हरिणनेत्रा हारिहावा हसन्ती
नरहरिसुखमूर्तिस्तस्करा चित्तवृत्तेः ॥ ६३ ॥

नरहरिकविराजव्याजतः शारदेयं
कथयति बत भावं कामिनी कुन्तलानाम् ।
तरुणशकुनिहिंसा कर्महेतोः किलेयं
[स]विषशरकिरातव्याततता वागुरन्ति ॥ ६४ ॥

किमपि नयनशोभा नाम पानीयमस्या
लसति नयनयुग्मे कृष्णसारेक्षणायाः ।
नरहरिकविरेवं वक्ति कृत्वा विचारं
किमु सरिति न तावत्सागरे सप्तमेऽपि ॥ ६५ ॥

कलय कनकवल्लीतुल्यभासोऽङ्गनायाः
कुटिलतरकटाक्षप्रेरणाशृङ्खलाभिः ।
जिगमिषुरपि यत्र क्वापि कामं विलासी
नरहरिकविराजो नागराजो निरुद्धः ॥ ६६ ॥

अमलकमलशोभाखण्डने पण्डितेयं
तुहिनकिरणलक्ष्मीजित्वरी तुण्डकान्तिः ।
नरहरिकविराजः कामलोलः कदाहं
मधुरमधरमस्याः केलिकाले पिबेयम् ॥ ६७ ॥

दशति मृदु धुनीते कुन्तलं मञ्जुवाणी
धयति मधुरमोष्ठं रम्यरोमाञ्चितेन ।
रचयति रचनाभिर्भावसंभाविताभि-
र्नरहरिपरिरम्भे संभ्रमं सारसाक्षी ॥ ६८ ॥

झगिति न कितवानां संभवैः संभ्रमानां
नरहरिकविचेतश्चेतसा चन्द्रमुख्याः ।
नयननलिनपाली संप्रनालीसमेतं
सलिलमिव सरस्योः सामरस्यं समेति ॥ ६९ ॥

सविनयमनुवारं वच्मि कृत्वा विचारं
नरहरिपरिहारं मा कृथा दुःखभारम् ।
हृदि कुरु नवहारं मुञ्च कोपप्रकारं
कुरु पुलिनविहारं सुभ्रु संभोगसारम् ॥ ७० ॥

अथ पृथ्वी—

सहैव हरिनामभिर्ननु न पाठितामप्यसौ
प्रियावचनमाधुरीं किल पपाठ कीरः सुधीः ।
न सन्ति कति पक्षिणो नरहरे शुकः केवलं
लभेत कथमन्यथा वचनमाधुरीमीदृशीम् ॥ ७१ ॥

यदा नरहरिस्तया ललितहासमङ्गीकृतो
विलासरसरञ्जितैः स्मरतरङ्गितैरक्षिभिः ।
दृगन्तकुसुमोत्करैः सकुतुकं सखीभिः कृतं
तदैव करतालिकागणझणत्कृतैर्मङ्गलम् ॥ ७२ ॥

अथ वसन्ततिलकम्—

वेणीधृतां नरहरिः कविनायकोऽपि
श्यामच्छविं न किल वर्णयितुं समर्थः ।
यद्गौरवेण कनकद्रवगौरगात्री
श्यामापदं शिरसि चन्द्रमुखी बिभर्ति ॥ ७३ ॥

कर्णान्तदीर्घनयना नयनाभिधाने
द्वे दीर्घिके नरहरे रसपूरपूर्णे ।
लज्जाभिधां ललितनावमिहाधिरूढो
रत्या समं विहरते मदनो विनोदी ॥ ७४ ॥

एकार्णवे भवति नाम वरावरस्य
श्रीकेशवौ रहसि केलिरसं भजेते ।
एकार्णवे हि तमसोऽपि घने निशीथे
लीलारसं नरहरे तरुणौ भजेते ॥ ७५ ॥

आलक्ष्य दर्पणतले दयितेन दत्तं
बिम्बाधरान्तरदनक्षतचारुभावम् ।
चन्द्रानना नरहरे प्रणयप्रमोदा-
दिन्द्रासनस्थितिसुखानि तिरस्करोति ॥ ७६ ॥

मन्दोदरी मदनताण्डवपण्डितेन
तुण्डेन कुण्डलवता रदखण्डितेन ।
रागारुणा नरहरे रतिरङ्गरम्यं
रामा रसेन रमणं रमयांचकार ॥ ७७ ॥

लीला विधाय रतिराजरसाभिरामां
लीलान्तरं नरहरौ ननु याचमाने ।
भ्रूभङ्गरङ्गरुचिरं वनितावितीर्णं
ताटङ्कताण्डवसुखं कथयामि कस्मै ॥ ७८ ॥

प्रक्षीणमध्यविशदस्तनतुङ्गभावा
कन्दर्पदर्पदरमन्थरलोचनश्रीः ।

हेमाचलस्थलविशालनितम्बबिम्बा
बिम्बाधरा नरहरेर्हृदयं धिनोति ॥ ७९ ॥

अत्यन्तचीनवसनेन पिधाय कायं
निद्रां गता समणिभूषणभूषिताङ्गी ।
प्रत्यक्षतोऽपि परमां रुचिमावहन्ती
चन्द्रानना नरहरेर्नयने जहार ॥ ८० ॥

मञ्जीरमुग्धमरुणं चरणारविन्दं
मन्दं निधाय वदनं परिवर्तयन्ती ।
आलोकितुं नरहरिं भ्रमराभिरामै-
र्नेत्रैरियं निभृतमातुरतां व्यनक्ति ॥ ८१ ॥

स्निग्धेन लोचनयुगेन यथा रतान्ते
दृष्टस्तया नरहरिः स्मरकेलिदक्षः ।
एणीदृशा किल तथैव कटाक्षितोऽसौ
पुष्पाञ्चितो विलुलितो घनकेशपाशः ॥ ८२ ॥

कण्ठे निधेहि नवचम्पकदामरम्यं
तुङ्गौ स्तनौ मम विलेपय चन्दनेन ।
एवं वचो नरहरिं प्रति तेऽनुरूपं
रूक्षस्य हन्त वचसः सखि नावकाशः ॥ ८३ ॥

सौन्दर्यकुण्डमबले तव नाभिकुण्डं
रोमावली परिसरे मृदुशाद्वलश्रीः ।
पातुं गतं नरहरेर्नयनद्वयं चे-
न्नैवागतं सुतनु तर्हि निमग्नमेव ॥ ८४ ॥

पातुं क्षमो नहि पुरो विहितापराधः
केशप्रसाधनविधानपरो बभूव ।
व्यावृत्य सापि झटिति स्मरबाणनुन्ना
जग्राह तं नरहरेः करपञ्जरेण ॥ ८५ ॥

स्वैरं निपीय वदनं मदनाभिरामं
लीलारसेन चिबुकं स्पृशति प्रवीणे ।
स्वीयं वपुर्नरहरे सकलं समर्प्य
नानृण्यमाप सुमुखी सुखदस्य तस्य ॥ ८६ ॥

यूना प्रणम्य चरणौ शिरसा गृहीतौ
संचुम्बितौ नयनयोरपि योजितौ च ।
जाता प्रसादसुमुखी चरणान्तरेण
जग्राह यन्नरहरेः सघनः प्रसादः ॥ ८७ ॥

निद्रां गतापि नयनप्रियमेव कृष्णं
निम्नादरान्नरहरे हृदि लालयन्ती ।
स्वप्नेऽपि जागरकथामनुभूय राधा
न स्वप्नजागरविभेदमुरीचकार ॥ ८८ ॥

प्राणाधिके झटिति संमुखमागते सा
चैलाञ्चलेन हि बभूव कृतावधाना ।
लज्जाञ्चलेन विदधे वदनं तथेयं
रागी यथा नरहरे पिहितं विवेद ॥ ८९ ॥

श्री**कालिदास**कवितासुकुमारमूर्ते
**बाण**स्य वाक्यमिव मे वचनं गृहाण ।
**श्रीहर्ष**काव्यकुटिलं त्यज मानबन्धं
वाणी कवे**र्नरहरे**रिव संप्रसीद ॥ ९० ॥

धम्मिल्लबन्धमवलोक्य सुगन्धसिन्धुं
विद्यावतो नरहरेरुदितो वितर्कः ।
साकं विचित्रसुमनोभिरुदारकेश्या
बद्धानि किं नु सुमनांसि रतिप्रियाणाम् ॥ ९१ ॥

धम्मिल्लबन्धमवलोक्य विलासवत्याः
किं राहुरेष इति संवलितः क्षणेन ।

चन्द्रानना वदनचन्द्रघनप्रसादै-
दूरीकृतो नरहरेर्मनसो वितर्कः ॥ ९२ ॥

चन्द्राननावदनचन्द्रविलोकनेन
चन्द्रोऽयमेव जगतीति हृदि प्रवृत्तः ।
लीलाचलन्नयनखञ्जनदर्शनेन
दूरीकृतो नरहरेर्मनसो वितर्कः ॥ ९३ ॥

बालाविलोचनमृगद्वयदर्शनेन
जातोऽपि कोमलमृगद्वयपक्षपाती ।
कन्दर्पकेलिचतुरेण निरीक्षणेन
दूरीकृतो नरहरेर्मनसो वितर्कः ॥ ९४ ॥

मन्दस्मितामृतमहारसपूरपूर्णे
वामाधरे नरहरेरुदितो वितर्कः ।
अस्याः सरोरुहदृशः किमु भालवर्ती
सिन्दूरपूरतिलकः प्रतिबिम्बितोऽयम् ॥ ९५ ॥

शोणेऽधरे नरहरेः कवितारसेन
स्यात्पद्मराग इति संवलितो वितर्कः ।
पीते तदैव किल तत्र सुधारसाले
दूरीकृतो मधुरतागुणसेवनेन ॥ ९६ ॥

वक्षोभवे नरहरेर्मनसो वितर्को
जातोऽपि हेमकलशद्वयपक्षपाती ।
दूरीकृतो झटिति लोलविलोचनाया-
श्चन्द्रार्धसुन्दरनखक्षतलक्षणेन ॥ ९७ ॥

नास्त्येव नूनमुदरं किमु किंचिदस्ती-
त्येवंविधस्तरलितोभयपक्षपातः ।
रोमावलीं कलयता करपल्लवेन
दूरीकृतो नरहरेरुदितो वितर्कः ॥ ९८ ॥

स्वैरं निपीय रुचिरां तनुरोमराजीं
चित्ते भृशं नरहरेरुदितो वितर्कः ।
अत्यन्तभास्वरतया वपुषोऽङ्गनाया
वेणी विनीलविषयः प्रतिबिम्बितोऽयम् ॥ ९९ ॥

किं वा मृदूनि कुसुमानि किमु प्रिया स्या-
देवंविधः कुसुमतल्पगतस्य यूनः ।
उत्तुङ्गपीनकठिनस्तनमर्दनेन
दूरीकृतो नरहरेर्मनसो वितर्कः ॥ १०० ॥

हस्तावलोकनविधौ स्फुरितोऽपि दैवा-
दुत्फुल्लकोकनदयुग्मकृतावधानः ।
रत्नाङ्गुलीयनखराजिनिरीक्षणेन
दूरीकृतो नरहरेर्मनसो वितर्कः ॥ १०१ ॥

जङ्घाद्वये जघनसुन्दरदर्शनाया
रम्भाद्वयं किमु भवेदिति संप्रवृत्तः ।
स्पर्शेन कामसुखदेन विनोदभाजा
दूरीकृतो नरहरेर्मनसो वितर्कः ॥ १०२ ॥

संचारचारुचरणद्वयसंनिधाने
हंसद्वयं किमु भवेदिति संप्रवृत्तः ।
हंसस्वनप्रजयिहंसकसि(शि)ञ्जितेन
दूरीकृतो नरहरेरुदितो वितर्कः ॥ १०३ ॥

ताटङ्करत्नरचनामवलोक्य रम्या-
मेवंविधो नरहरेरुदितो वितर्कः ।
कन्दर्पशास्त्रपठितानि वसन्ति मन्ये
रत्नानि विभ्रमविलासरसात्मकानि ॥ १०४ ॥

लोका वदन्ति सखि रत्नलन्तिकेयं
तुङ्गस्तनान्तरगता हृदि राजतीति ।

ताम्बूलचर्वणरसप्रतिबिम्बरूपं
तर्काधिकं नरहरेर्मतमन्यदेव ॥ १०५ ॥

किं मानवीयमथवा स्मरदेवतेय-
मेवंविधो मनसि ते लसितो वितर्कः ।
तत्खण्डनं नरहरे न तवास्ति युक्तं
सत्यं हि सा सुवदना स्मरदेवतैव ॥ १०६ ॥

शाटीं लसत्कुसुमचित्रवतीं वसाना-
मालोकितुर्नरहरेरुदितो वितर्कः ।
रङ्गस्थलीं गमयितुं कुसुमायुधेन
क्षिप्तैर्विचित्रकुसुमैरिव संवृताङ्गी ॥ १०७ ॥

अध्यापितः करतले कलितः किलायं
कीरस्त्वया कुवलयाक्षि कुतूहलेन ।
अध्यापनेन जनिता स्वरमाधुरीदं
तत्वं परं नरहरिः सखि वेद नान्यः ॥ १०८ ॥

पाणौ स्थितो नरहरे मुकुरोऽङ्गनायाः
कर्तुं छलेन वदनं ननु सद्वितीयम् ।
तेनैव हन्त मुखकान्तिपराजितेन
विस्पष्टमेव कथितं मुखमद्वितीयम् ॥ १०९ ॥

भाले विधाय तिलकं तव कुङ्कुमेन
कण्ठे निधाय दयिते नवरत्नम(मालाम्) ।
नीराजनां नरहरिर्वितनोति नेत्रै-
रद्यापि किं न कुरुषे सुमुखि प्रसादम् ॥ ११० ॥

कण्ठे लगन्तमधरामृतपानलोलं
लीलाकुलं नरहरिं प्रति संभ्रमेण ।
दूरे भवेति वचनं यदुवाच वामा
मन्ये तदेव निकटे भवलक्ष्यतुल्यम् ॥ १११ ॥

अथ प्रान्ते शिखरिणी—

तया मुक्तः श्वासस्तदभिमुखमाधाय वदनं
तदन्यासंपर्कं स्वकृतमपि ससार दयितः ।
ह्रिया नम्रे तस्मिन्कृतवति नतिं मानसमयीं
प्रसादं कुर्वाणा सखि नरहरे साम विदधे ॥ ११२ ॥
अलिश्यामं व्योम स्फुटमृगमदः प्रच्छदपट-
परिस्तीर्णास्ताराः सखि नरहरे ताः सुमनसः ।
अनल्पोऽयं तल्पः सरसरमणी किंच रजनी
कलानाथो नाथः कलय समयोऽयं रसमयः ॥ ११३ ॥
चमत्कारं कुर्वन्प्रतिपदमलंकारसहितः
पदन्यासो यस्याः प्रकृतिमधुरो भावरुचिरः ।
निदानं तादृश्या गतिगमकवित्रां(?) बलभृतः
समुद्रः पद्मायाः सरसकवितायाः नरहरिः ॥ ११४ ॥
शृङ्गारशतकशतकं यदपि निरुक्तं पुरातनैः कविभिः ।
तदपि तुलां नारोहति नरहरिशृङ्गारशतकस्य ॥ ११५ ॥

इति [श्रीकविवर]नरहरि[विरचितं] शृङ्गारशतकम् ।

---

## उत्प्रेक्षावल्लभकविविरचितं[1]

## भिक्षाटनकाव्यम्[2] ।

प्रथमा पद्धतिः ।

कल्याणमाहवतु वः शिवयोस्तदेकं
गात्रं यदीयमसितच्छवि कण्ठमूलम् ।

---

१. अस्य च कवेः 'उत्प्रेक्षावल्लभः' इति नाम कव्यन्तरदत्तमेव प्रतीयते. वास्तविकं नाम तु प्रथमपद्धतिसमाप्तिपद्यदर्शितं 'शिवभक्तदासः' इति भवेत्. यथा नवमगुच्छकमुद्रितषष्ठकाव्यसुन्दरीशतककर्तुः श्रीगोकुलस्य 'भारत्यैव क्रियते स्तोत्रैः संतुष्टया द्विजद्वारा । श्रीगोकुलस्य सुकवेरुत्प्रेक्षावल्लभेत्यभिधा ॥' इति श्लोकदर्शितमुत्प्रेक्षावल्लभनाम. अस्य देशकालौ न ज्ञायेते. २. अस्य च पुस्तकमेकमेव विलक्षणसंदिग्धलिपिलिखित-

वामेतरेऽपि कुरुते सितभासि भागे
प्रारब्धशैलतनयापरिणामशङ्काम् ॥ १ ॥
कार्श्यं क्षिणोतु भवतां परमेश्वरस्य
भिक्षाटनं तदनुसंहितदेहिशब्दम् ।
यन्मानिनामपि विधेर्विपरीतभावे
याच्ञोक्तिदैन्यसहमेव मनश्चकार ॥ २ ॥
सद्यस्तुषारगिरिजौषधिसेवयैव
यः स्वोपयुक्तगरलं शमयांचकार ।
अन्यैरशक्यशमनाज्जननामयाद्वः
पायादपायनिलयादयमादिवैद्यः ॥ ३ ॥
नित्यं करोतु भगवान्स करीन्द्रवक्त्रः
प्रारभ्यमाणशुभकर्मविघातलोपम् ।
दोषानुषङ्गरहितः स शिवोऽपि यस्य
भृङ्गेषु गण्डतलचुम्बिषु साभ्यसूयः ॥ ४ ॥
वाल्मीकिरस्तु विजयी प्रथमः कवीनां
तस्यानुसारसरलः स च कालिदासः ।
अन्ये भवन्तु जयिनः कवयोऽथ मा वा
एषां कृतः कृतिषु नैव मयावगाहः ॥ ५ ॥
सन्त्येव सूक्तिरसिका बहवो मनुष्याः
स्वर्गौकसो नवसुधारसनिर्वृताश्च ।
तौ दुर्लभौ कविवचःस्खलितस्य सोढा
मर्त्येषु सागरगरस्य च यः सुरेषु ॥ ६ ॥
भूयानसत्कविजनो जगतीति खेदा-
न्मौनग्रहः सुकविभिर्न कदापि कार्यः ।

---

मस्मभ्यं काव्यमालार्थं प्रेम्णा तञ्जाउरनगरवासिभिः टी. एस्. कुप्पूस्वामीशास्त्रिभिः प्रेषितम्, तेषामतीव धन्यवादं दद्मः. परंत्वेतत्तु ज्ञेयम् 'कवीनां निरङ्कुशत्वम्' इति काव्यं प्रायः समुपलभ्यते.

काकै रसस्य निर्निदैर्निचितेऽपि लोके
किं कोकिला विदयते नहि कूजितानि ॥ ७ ॥
दुर्दान्तदुर्जनचिते भुवने नराणां
प्रायो वरं विकलतैव कलोपपत्तेः ।
राहुग्रहेण न कदापि कलाविहीनः
पूर्णस्तु हन्त परिभूयत एव चन्द्रः ॥ ८ ॥
एकेन सूक्तिमणिना हृदयंगमेन
प्राज्ञस्य सत्कविपदं कुरवि(?) प्रयाति ।
वक्षोगतेन मणिनेव परस्य पुंसो
रत्नाकरत्वगणना लवणार्णवस्य ॥ ९ ॥
नापेक्षते महदपि प्रथमानदोषं
निर्दोषमल्पमपि नन्दति वस्तु लोकः ।
मूर्ध्ना बिभर्ति कृशमप्यनिशं सुधांशुं
शंभुः कलङ्कर(स)हितं न तु पूर्णबिम्बम् ॥ १० ॥
सर्वे खलास्तिलकयन्तु चिराय पृथ्वीं
सत्संभवो बहु मतः सुजनेषु हेतुः ।
घोरेषु घर्मदिवसेष्वतिलङ्घितेषु
छायाद्रुमान्मृगयते नहि कोऽपि मर्त्यः ॥ ११ ॥
सन्तः क्षतानि जनयन्तु यथेष्टमस्या-
माभाति तैरधिकमेव सरस्वती मे ।
दन्तक्षतं प्रियतमैरुपभोगकाले
किं मण्डनाय न भवेद्वरसुन्दरीणाम् ॥ १२ ॥
सन्त्येव केऽप्यमितवाङ्मयदुर्विदग्धा-
स्तेषां पुरः सुकविभिः स्वगिरः प्रकाश्याः ।
तेजस्यति प्रवितते सति तिग्मरश्मे-
र्मुञ्चन्ति केचिदुपला निजमल्पतेजः ॥ १३ ॥

भूत्वा चिरेण गमिताः कति नाम सन्तः
पृथ्वीश्वराश्च कति नाम तथेतरेऽपि ।
अद्यापि कीर्तिवपुषा कवयः पृथिव्यां
जीवन्ति तेष्वभिहितस्तुतयोऽथवा तैः ॥ १४ ॥
मा मा परत्र विषये विषमेक्षणे मे
तस्मिन्सदा भवतु हीनगुणापि वाणी ।
यो मूर्ध्नि मुग्धहृदयो जनगर्हणीयां
धत्ते सुधांशुकलयैव सहास्थिमालाम् ॥ १५ ॥
आकर्णयन्तु मम सूक्तिविदः प्रबन्धं
तैर्नन्द्यतां पुनरयं खलु निन्द्यतां वा ।
आकर्णगोचरतयैव भवेद्वरीया-
नस्माकमस्तु सफलो रचनाप्रयासः ॥ १६ ॥
वृत्तं[1] वसन्ततिलकं विषयस्य जीव-
भिक्षाटनं कविरसौ शिवभक्तदासः ।
शृङ्गार एव हि रसस्तदिह प्रबन्धे
श्रद्धा न कस्य यदि सूक्तिविनोदशीलः ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये काव्यमुखपद्धतिः प्रथमा ।

---

द्वितीया पद्धतिः ।

भिक्षाटनेन पुरुहूतपुराङ्गनाना-
माकस्मिकोत्सवविधायिनि भूतनाथे ।
तासामनङ्गशरजर्जरमानसानां
नानाविधानि चरितानि वयं वदामः ॥ १ ॥
रथ्यागतस्य गिरिशस्य विलोकनाय
निर्गन्तुकाममनसो(?) वनितागृहेभ्यः ।
नैजाभिरूप्यगुणदर्शितपौनरुक्त्य-
माचार इत्यभिमतं परिकर्म चक्रुः ॥ २ ॥

---

१. अस्फुटविषयोऽयं श्लोकः.

चन्द्रस्य संचितकलस्य शरत्प्रसादो
गन्धद्विपस्य च पुनर्मदिरोपयोगः ।
प्रागेव यौवनपरिष्करणे शरीरे
भूयोऽपि भूषणविधिः प्रमदाजनस्य ॥ ३ ॥

[1]लाक्षान्नियातुमवलम्बितमात्र एव
सख्या करेण तरुणाम्बुजकोमलेन ।
ईशान्तिकव्रजनविघ्नभुवा रुषेव
कस्याश्चिदग्रपदमाशु बभूव रक्तम् ॥ ४ ॥

कस्याश्चिदग्रपदमाशु सखी विधाय
लाक्षाक्र(क्त)मेकमपरग्रहणे प्रसक्ते ।
आरञ्जितेतरविवेकमपारयन्ती
कर्तुं मुहूर्तमनयोः स्तिमितावतस्थे ॥ ५ ॥

कस्याश्चिता(दा)यतदृशश्चरणारविन्दे
नैपथ्यकर्मनिपुणेन सखीजनेन ।
आमुक्तमेव मणिनूपुरमुन्मदस्य
मुक्तक्षणेन निगलो मदनद्विपस्य ॥ ६ ॥

काचिद्गतित्वरणलुप्तमतिश्चकार
चूडामणिं चरण एव चकोरदृष्टिः ।
यः स्थापयत्यसम एव पदे स्वमूर्ध्ना
संभाव्यमस्य किमहो न जनस्य हास्यम् ॥ ७ ॥

उद्दामदामकरचापविकल्पमौर्वीं
पुंवर्गचित्तमृगवञ्चनमार्गरज्जुम् ।
काञ्ची मदीयवलयान्न बहिः पुमर्थ
इत्यूचि(चु)षी कलरवेण बबन्ध काचित् ॥ ८ ॥

तां दिव्यसिन्धुपुलिनाकृतिभाजि काचि-
त्काञ्चीं नितम्बफलके कलयांचकार ।

१. एतत्पादस्यास्फुटार्थत्वेन पद्यमप्यस्फुटार्थम्. 'लाक्षां निमातु' इति पाठो वा भवेत्.

उत्तीर्णभीमजननाम्बुधयोऽपि मुक्ता
यामाश्रिता जघनसंगमकौतुकेन ॥ ९ ॥
मुक्तेरपि प्रियतमाजघनोपभोगः
श्रेयान्न मृग्यमिह वस्तुनि नः प्रमाणम् ।
तत्पश्यतायतदृशा रशनाकलापे
मुक्ता अपि स्वयमहो पुनरेव बद्धाः ॥ १० ॥
पीनस्तनद्वितयधारणकर्शितस्य
मध्यस्य मण्डनविधीन्न चकार काचित् ।
निःशङ्कमन्यभरनिर्वहणैकजाता-
त्कार्श्यात्परं न खलु भूषणमस्ति किंचित् ॥ ११ ॥
हारेण च स्तनयुगं परिभूष्य पीन-
मत्यायतं च जघनं रशनागुणेन ।
मध्यस्तु हन्त न कयापि विभूषितोऽभू-
द्रिक्तिः सतां हि रविनैव हि माननीयः ॥ १२ ॥
पङ्कोद्भवत्वपरिवादभयान्मृगाक्ष्या
जातं सरोजयुगलं कुचवेशधारी ।
शक्यं न धातृविहितं परिहर्तुमस्य
भूयोऽपि येन घनचन्दनपङ्कलेपः ॥ १३ ॥
तसानि[1](?) शङ्खवलयानि करे कयाचि-
त्तानीन्दुखण्डघटितानि ममैष तर्कः ।
यस्या निसर्गमृदुपाणिसरोजमेषा-
मामोचने झटिति यन्मुकुलीबभूव ॥ १४ ॥
एकावलीकलितमौक्तिककैतवेन
कस्याश्चिदुन्नतपयोधरयुग्मसेवाम् ।
चक्रुर्मनांसि यमिनामतिनिर्मलानि
कंदर्पमुक्तशरपातकृतान्तराणि ॥ १५ ॥

१. 'दत्तानि' इति पाठो भवेत्.

दास्यामि हारहरिचन्दनकुङ्कुमानि
दाक्ष्यं यदा हरवशीकरणं तदा ते ।
इत्यात्मनः स्तनमुपांशु निगद्य काचि-
त्सर्वेतराङ्गपरिकर्मविधिं चकार ॥ १६ ॥

नूनं विदग्धजनकृत्यमतर्क्यपाकं
लाक्षारसप्रणयिना वनिताजनेन ।
कस्याश्चिदोष्ठपुट एव कृतः समस्तं
यूनां मनः सपदि लम्भितरागमासीत् ॥ १७ ॥

काचित्स्वकीयदशनानि विशोधयन्ती
बिम्बाधरोष्ठरुचिसंगमपाटलानि ।
आदर्श एव परिवारजनोपनीते
दृष्ट्वा न जात्वपि पुनर्विरराम रामा ॥ १८ ॥

प्रागेव मोहनमथाञ्जनयोजनेन
चक्रे तथा मृगदृशो नयनं सखीभिः ।
पश्यन्यथा युवजनो गलमीश्वरस्य
निःशेषलुप्तगरलं गणयेदशेषः ॥ १९ ॥

साम्ये मिथः स्थितवतोऽभ्युपन्ने(?) नराणां
वैषम्यबुद्धिरुभयोः समदर्शनेन ।
इत्याकलय्य किल कापि विलोचनान्ते
कर्णद्वये गलितमुत्पलमाततान ॥ २० ॥

नामार्द्रचन्दनरसेन सखीललाटे
लेखां मदालसदृशो विदधे विदग्धा ।
यां वीक्ष्य शंभुरपि मुग्धजटाशशाङ्के
शङ्काकुलीकृतमनाः स्वकरं चकार ॥ २१ ॥

मा जातु राहुपरिभूतिरतर्क्ययोगा-
न्मा भूत्क्षयः किमपि मा च कलङ्कयोगः ।

कस्याश्चिदेवमभिधाय मुखेन्दुबिम्बं
रक्षामयं तिलकमासजनश्चकार ॥ २२ ॥
कस्याश्चन प्रचुरकेशभरे जलार्द्रे
जाड्यास्पदं तरुणवर्गमनो बभूव ।
कालेयधूपजुषु(षि) धूपितमात्तपुष्पे
पुष्पास्त्रविद्धमथमङ्गी(?)निबद्धमेव ॥ २३ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये मण्डणपद्धतिर्द्वितीया ।

---

तृतीया पद्धतिः ।

नारीषु निर्गमनमण्डनतत्परासु
सख्योपचारसगुणो(णा)र्थमनोहराणि ।
ईशावलोकनमुहूर्तनिरोधभीत्या
प्रारब्धमण्डननिषेधफलान्यवोचन् ॥ १ ॥
अर्काभिमुख्यसलिलस्थितिसाधनानि
रक्ताम्बुजस्य फलितान्यधुना तपांसः(सि) ।
यद्भीरु तस्य परिभूतिकरं पदं ते
लाक्षारसान्तरितरागमिदं करोषि ॥ २ ॥
गन्तुं परैरविदितं यदि शंभुपार्श्वे
वाञ्छा किमालि रणता नवनूपुरेण ।
कर्तुं हरस्य चरितान्यभिलाषवद्भिः
प्रारम्भ एव पिशुनः परिवर्जनीयः ॥ ३ ॥
मा विश्वसः सखि कलां मणिमेखलां तां
क्षौमस्य यद्यभिमतं परिरक्षणं ते ।
यावं हितापि दृढबन्धमिहाप्रयत्ना-
ज्जायेत बन्धविमुखी पुरतः पुरारेः ॥ ४ ॥
यानि व्यथन्ति विरहे विरलं न याति(न्ति)
योगे हरेण वलयैः सखि किं फलं ते ।

नैवास्ति यैर्वियदि चा(सं)पदि चोपयोगे(गस्)
तैः संगमं न खलु वाह(ञ्छ)ति कोऽपि मर्त्यः ॥ ५ ॥
विस्तारिणी(णि) स्तनतटे हरिचन्दनं ते
लज्जावहं किमनु लिम्पति कातराक्षि ।
संभोगसंक्रमितकान्त····रा·······
दन्तःप्रवृद्धफलकौषधिलेपकल्पम् ॥ ६ ॥
मध्यः कृशो विधिवशेन समर्पितोऽयं
तस्योपरि स्तनभरो नवयौवनेन ।
भूयोऽपि हारमभिवाञ्छसि तत्र वोढु-
मेकस्य भङ्गकरणे बहवः प्रवृत्ताः ॥ ७ ॥
बध्नासि दग्धमणिनूपुरमङ्घ्रियुग्मे
कस्मै फलाय यदि निर्गमनेऽभिलाषः ।
एणीदृशा दृ(शो द्रुं)तगतेः प्रतिबद्ध(न्ध)भावे
नास्ति ध्रुवं निगलनूपुरयोर्विशेषः ॥ ८ ॥
भस्मव लिम्प कुचयोः सखि रक्षणार्थं
मध्यावलोपनतया यदिमौ सुदुःस्थौ ।
हारेण किं किमथवा नवकुङ्कुमेन
लब्ध्वात्मनः खलु पुनः परिकर्मवाञ्छा[म्] ॥ ९ ॥
मा चन्दनेन कुचयोः कुरु पत्त्रभङ्गं
लब्ध्वा दृशोरनुमतिं स तु कल्पितव्यः ।
यादृच्छिकप्रणयिना विरहे हरेण
नेत्रद्वयात्तव पतिष्यति बाष्पपूरः ॥ १० ॥
पर्याप्तयौवनकृतोन्नतिशालिनौ ते
मा त्वं तिरस्कुरु कुचौ नवकुङ्कुमेन ।
स्तोकोद्गमं मनसि कश्चिरमाशशंसे
जेतुं ययोः पशुपतिं निजपूर्वशत्रुम् ॥ ११ ॥

आजन्मपाटलरुचावधरे तदीये
　रागोऽपरः पुनरयं सखि दूषणाय ।
जातास्य रत्नशकलस्य कृतोऽपि दक्षै-
　र्रर्घक्षयाय नवकृत्रिमरागयोगः ॥ १२ ॥
मा कज्जलेन मलिनीकुरु लोचनान्ते
　यद्यस्तदुक्तिमवमन्य तथा कियन्त ।[1]
चन्द्रश्चिराय वदनेन तवाभिवाञ्छ-
　न्साम्यं लभेत सखि हन्त मलीमसोऽपि ॥ १३ ॥
स्निग्धापि न प्रणयि चेत्तव नेत्रमन्य-
　म(द)न्यस्य मा भवतु संस्करणप्रयासः ।
आकल्पितादपि तयोः सखि केवलस्य
　जानातु कान्तिमखिलामखिलोऽपि लोकः ॥ १४ ॥
पर्याप्तदीर्घनयनोत्पलभूरितं(षिते) ते
　कर्णे कुतः सखि नवोत्पलमादधासि ।
यद्यन्यथा(दा)भरणमिच्छसि कर्णयोस्ते
　पथ्योक्तय[:] श्रवणभूषणतां लभन्ताम् ॥ १५ ॥
आदर्शमाशु सखि मुञ्चतु वापराधं
　कस्त्वां विनापि मलिनाशयमाश्रयेत ।
छायां प्रदृश्य सततं तव योऽद्य रूपे
　निर्द्वन्द्ववादमधुना शिथिलीचकार ॥ १६ ॥
केयूरनूपुरशिखामणिपारिहार्य-
　हारादिभिः किमबले शृणु संग्रहोक्तिम् ।
भूषा त्रपा मृगदृशः शुचि संप्रदायि
　पुंसः श्रुतं यदवरं परमङ्गभारः ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये मण्डनप्रतिषेधपद्धतिस्तृतीया ।

---

१. अस्फुटोऽयं द्वितीयः पादः.

चतुर्थी पद्धतिः ।

प्रेमोत्तरैः प्रियसखीवचनैरलङ्घ्यै-
रुत्तीर्य मण्डनविधानधुरं क[थं]चित् ।
वीथीसमागतवृषाङ्कविलोकनाय
निर्जग्मुरायतदृशो निजमन्दिरेभ्यः ॥ १ ॥
काचित्पदाग्रगलितेन गृहात्प्रयाती
लाक्षारसेन पदवीमरुणीचकार ।
सा च क्षणेन सरणीश्चरणाग्रमस्याः
कस्योपकर्तुमुपकर्तरि नैव वाञ्छा ॥ २ ॥
कस्याश्चिदात्तरभसे गमने प्रवृत्ते
काञ्ची पपात पदयोः करुणं क्वणन्ती ।
मध्यव्यपायगणनव्यथयेव कर्तुं
विच्छित्तिमाशु गमनोद्यमसाहसस्य ॥ ३ ॥
किंचिद्विलम्बितभरेण पयोधरस्य
तूर्णं गतास्वपि सखीषु हरोपकण्ठम् ।
तादृग्विधस्तनविजृम्भणमूलमेषा
सर्वार्थनीयमपि मध्यवयो निनिन्द ॥ ४ ॥
कृच्छ्रेण कापि गुरुणैव जनेन रोध-
मुल्लङ्घ्य शंकरसमीपमभिप्रतस्थे ।
हा हन्त शीघ्रगमनप्रतिरोधहेतु-
स्तस्यां पुनः स्तनभरोऽपि गुरुर्बभूव ॥ ५ ॥
काचिन्निवारितबहिर्गमना जनन्या
द्रष्टुं हरं भवनजालकमाससाद ।
तस्या विलोपनमदृश्यत दाशयत्न-
यत्नोपरुद्धशफरोपमितं क्षणेन ॥ ६ ॥
कृत्वा मसीमलिनमीक्षणमेकमेका
वैकल्पभूषणमथान्यदियाय रथ्याम् ।

किं नैव जैत्रमनवो(यो)र्मदनास्त्रमेकं
दग्धं विषेण यदि रूढकलङ्कमन्यत् ॥ ७ ॥
ईशावलोकनकुतूहलमश्रुलेशै-
र्वाचं विनैव जननीं प्रति काचिदूचे ।
तस्यास्तथैव विदधे गमनाभ्यनुज्ञां
मातापि पाणिवलयापलयच्छलेन ॥ ८ ॥
धात्रीमुहूर्तविनिवारितनिर्गमाया
बाष्पस्मितद्वितयलब्धविरुद्धयोगम् ।
कस्याश्चिदाननमशान्तिहिमाम्बुजालं
प्रत्यूषपङ्कजमिव क्षणमाबभासे ॥ ९ ॥
भूषाविधावपि निवृत्तमनाः स्वकीये
शंभोः समीपगमनत्वरयैव काचित् ।
भूषोद्यतां प्रियसखीं परिपाल्य तस्थौ
स्निग्धं तिरात्मनि सखीष्विव हन्त नार्यो ॥ १० ॥
प्रारब्धमात्रकलजल्पितशिक्षणेन
वामप्रकोष्ठवलयावलिसंश्रितेन ।
काचित्ससंभ्रममुमापतिवीक्षणाय
क्रीडाशुकेन सह राजपथं प्रतस्थे ॥ ११ ॥
प्रस्थानसंभ्रमवशाद्गलितालकाया
लग्नाङ्घ्रियावकरसे पथि शोणरूपैः ।
धम्मिल्लपुष्पनिवहो हृदये प्रविष्ट-
रक्ताक्तमारविशिखाश्रियमाततान ॥ १२ ॥
आ(अ)स्थानगाम(मि)भिरलंकरणैरुपेता
भूयः परिच्छलननिह्नुतिरप्रसन्ना ।
वाणीव कापि कुकवेर्मधुपानमत्ता
वेवा(गा)न्निपातबहुलैव विनिर्जगाम ॥ १३ ॥

१. 'स्निह्यन्ति नात्मनि सखीष्विव हन्त नार्यः' इति पाठो भवेत्.

वेगप्रयाणसमये चलितालकेभ्यः
पुष्पैरथो निपतितैरपरा विरेजे।
ईशोपकण्ठगमनप्रणयस्य पूजां
कर्तुं निजाङ्घ्रियुगलस्य कृतोद्यमेव ॥ १४ ॥
याने गृहाद्बहिरुपान्तजनेन रुद्धे
रोषारुणं सपदि संभृतबाष्पपूरम्।
कस्याश्चिदीक्षणयुगं विदधे हुताश-
निष्ठ्यूतदत्तसलिलस्मरशास्त्रशङ्काम् ॥ १५ ॥
त्रुट्यद्गुणेन निजवृत्तपरिच्युतेन
संक्रान्तभूरिरजसा हतकन्तुकेन[1]।
व्याकुर्वता युवतिवश्यदशां नराणां
काचिद्विहाय विहृतिं हरमाससाद ॥ १६ ॥
नेत्रं विधाय धृतकज्जलमेकत(म)स्या
मात्रा परस्य करणेऽपि तथा प्रवृत्ते।
काचिद्भवान्तिकगतित्वरितप्रवृत्तै-
र्बाष्पैः कृतार्थमपि तेन समीचकार ॥ १७ ॥
त्याज्या सखि द्रुतगतिः कचधारकोऽयं
संशय्यतां तव यया समयाति(?) मध्यः।
लोके सुदुर्लभततो गुणवान्कृशोऽपि
यः कल्पतेऽन्यभरनिर्वहणोत्सवाय ॥ १८ ॥
अप्युत्तरांशुकमिदं हरितप्रयाणौ
पीनस्तना क्षिपति चेल्लघुभारभीत्या।
वोढुं क्षमा भवसि तत्र निषेदुसीनां(षीणां)
भारं पुनस्तरुणचित्तपरम्पराणाम् ॥ १९ ॥
यत्नान्मयैव विहितं तिलकं ललाटे
घर्माम्बुना विलुलितं गतिसंभ्रमेण।

1. 'कन्तुः कन्दर्पवित्तयोः'.

पत्रक्रिया च सखि ते कुचयोर्विलुप्ता
व्यापत्तये भवति हन्त जलेन[1] योगः ॥ २० ॥
कण्ठोत्पलान्नयनमाप गतिच्युताचे
तन्मीलने मुखमयं न जहाति भृङ्गः ।
येनैनमद्य विनिवारयसि प्रमत्ते
तस्मिन्करेऽपि न किमम्बुजसाम्यदोषः ॥ २१ ॥
गत्वा तथा त्रिचतुराणि पदानि तूर्णं
गन्तुं पुनः सखि शनैरपि न क्षमासि ।
प्रायः स्वशक्तिमन(नि)रूप्य कृता प्रवृत्तिः
शक्तिर्नि(क्ति नि)जामपि शरीरभृतां क्षिणोति ॥ २२ ॥
लाक्षारुणैः सपदि विश्लथकेशपुष्पै-
र्भ्रष्टैरशोभत परं पदवी परस्याः ।
आशंभुदर्शनमनुद्रवत स्मरस्य
बाणैर्विभिन्नहृदयैरिव शोणितार्द्रैः ॥ २३ ॥
खिद्यल्ललाटमधिकाकुलितालकान्तं
काचित्स्त(त्त)तस्तनपयोधररुग्णमध्यम् ।
दोलाछलेन रतिशी(शि)क्षणमाचरन्ती
हित्वा तदाशु हरपार्श्वभुवं जगाम ॥ २४ ॥
काचिद्विहृत्य किल कन्तुककेलिरङ्गा-
द्भूरेणुरूषिततनुर्निरगान्मृगाक्षी ।
उत्फुल्लपङ्कजवनेषु चिरं चरित्वा
किंजल्करेणुपरिधूसरितेव लक्ष्मीः ॥ २५ ॥
यान्ती हरं प्रति शशाङ्कमुखी कराग्र-
लाक्षारसैररुणितां पदवीं चकार ।
सा च क्षणेन पदवीपथमन्मथस्याः(?)
किं नोपकारिणि भवेदुपकारवाञ्छा ॥ २६ ॥

---

१. जडेन, वारिणा च.

पूर्वं द्विरेफपरिभूतिभयाद्भवत्या
यत्केशपुष्पभरणं हरिणाक्षि मुक्तम् ।
व्यर्थं तदद्य पुनरप्यलकेषु भृङ्गाः
पुञ्जीभवन्ति बकुलभ्रमतः पतन्ति ॥ २७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये निर्गमनपद्धतिश्चतुर्थी ।

---

पञ्चमी पद्धतिः ।

यत्रागतिः पशुपतेर्नगरप्रवेशे
तत्रैव धावनपरस्य वधूजनस्य ।
संजल्पितानि पथि यानि मिथो बभूवु-
रेतानि सन्तु रसिकश्रुतिपारणाय ॥ १ ॥

पादाम्बुजं सखि तवेदमियं धरित्री
सद्यः परागपरिधूसरितं विधाय ।
पद्मेन शोच्यजननेन समीकरोति
सत्यं भवत्यसमसाम्यकरस्त्रिसङ्गः ॥ २ ॥

मामप्यपेतकरुणे परिपाल्य याहि
शंभुं विलोकयितुमुत्सुकतामतीव ।
पत्न्यां[1] विलासगमनं न परत्वयातं
हंस्या गती विधति पक्षतिसाधिता च ॥ ३ ॥

हारो न(न्व)यं कुचभरे निहितो भवत्या
प्रस्थानसंचरितया तदतीव भद्रम् ।
आलिङ्गनं यदि करिष्यसि भूतभर्तु-
र्मा[द्र](भूत्)त्वदीयदृढमौक्तिकमर्मतोदः ॥ ४ ॥

मञ्जीरमा[2]लि चरणाश्रितमेतदेता-
वाहूय मञ्जुनिनदैर्गमने त्वदीये ।

---

१. उत्तरार्धस्यास्फुटार्थत्वम्. २. अस्फुटार्थोऽयं श्लोकः.

वाञ्छा तवात्तव मदालसया न चौर्ये
　चोरायते ग्रहसरः कलहंसकानाम् ॥ ५ ॥
मुक्तावलीं करतले दधती स्वकण्ठे
　विस्तृत्य कर्तुमबले त्वमतीव भासि ।
मन्त्रेण साधयितुमात्मयतेः शरीरं
　वाञ्छावती रतिरिव स्फटिकाक्षमालाम् ॥ ६ ॥
[1]मर्द्रैर्नदीयस्य शरधिद्वयमस्तमूर्ते-
　र्जङ्घात्मना परिणतं तव यद्ध्रुवं तत् ।
नो चेत्कथं मदनवैरिसमीपयाने
　जङ्घायुतस्य गतिरालि विलम्बिनी ते ॥ ७ ॥
वामे पदे निहितमार्द्रमलक्तकं ते
　चान्यत्र यत्तदतिसुन्दरमेव मन्ये ।
येनाद्य लब्धनपरापरिकर्म साम्यं
　नारीविमिश्रवपुषः परमेश्वरस्य ॥ ८ ॥
किं चित्रमत्र जघनं परमुद्वहन्त्या
　मद्री(न्दी)भवन्ति यदि ते गतयो वराङ्गी(ङ्गि) ।
यद्वीक्षणेऽपि गतधैर्यगुणा युवानो
　गन्तुं मनागपि पुनर्नहि शक्नुवन्ति ॥ ९ ॥
शंभोरवेक्षणमहोत्सव एव लप्स्ये
　नायाति शीघ्रमिदमालि पदाम्बुजं ते ।
ज्ञातं मम द्द(द्रु)तगतेश्च फलं प्रयत्ना-
　त्संलप्स्यते नयनयुग्ममितीर्ष्य एव ॥ १० ॥
विस्मृत्य यावकमकारि हरीन्द्र(रं दि)दृक्षो-
　र्नैवाधरे तव यमस्य(?) तदालि युक्तम् ।

---

१. अस्फुटार्थोऽयं पादः.

आत्मोपयुक्तगरलौषधिपानकामः
पास्यत्यवस्य(श्य)मधरामृतमिन्दुमौलिः ॥ ११ ॥
प्रागेव [1]बन्धरुचिलोचनकान्तिचौर्ये
नीलोत्पलं यदकरोः सखि नाद्य [2]कैन्ये(?) ।
बुद्धिभ्रमादिदमभूदिति मा विषादः
कस्तस्करं निजगृहाधिपतिं करोति ॥ १२ ॥
इन्दुर्मुखं कुचभरो गुरुरेव दत्तः
शुक्रोऽधरश्च तव लोहित एव जातः ।
एवं गृहात्मवपुषः सखि तत्र चित्रं
यत्पादयोरपि शनैश्चरता तयोस्ते ॥ १३ ॥
मा भूत्तवालि गिरिशस्य विलोकनाय
यान्त्या न मण्डनमकारि मयेति लज्जा ।
धत्ते विलासिजनलोचनपेयमेत-
न्निर्मक्षिकं मधु निराभरणं शरीरम् ॥ १४ ॥
मात्रैव ते गतिनिवारणमग्रतोऽभू-
त्सद्यस्तदा परिहृतं सखि बाष्पपूरैः ।
शक्ता न गन्तुमधुनासि नितम्बभारा-
द्दोषो निसर्गजनितः परिहारहीनः ॥ १५ ॥
हस्तस्थितां तु सखि ते नवपुष्पमालां
मा विस्तृता शिरसि कर्तुमिति स्म खेदः ।
दृष्टे शिवे सपदि तस्य कुतूहलेन
कर्णे निधातुमुचिता वरणोत्सवाय ॥ १६ ॥
त्याज्या सखि द्द(द्रु)तगतिः कुचभारतोऽयं
संशय्यतां तव यया समुपेति मध्यः ।
असिञ्जगत्यसुलभः सगुणादिरूढः
कार्ये निजे भवति यः परधारणाय ॥ १७ ॥

१. 'वन्धरुचिलोचनकान्तिचोरिनीलो' इति पाठो भवेत्. २. 'कर्णे' इति भवेत्.

नैष्फल्यशंकरवशाज्जनिभिर्हितोद्य[1]
यन्निर्मितौ शतधृतेरतिमात्रयत्नः ।
अस्य त्वदीक्षणयुगस्य विशालता सा
साफल्यमेष्यति शिवस्य विलोकनेन ॥ १८ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये निर्गमनपद्धतिः पञ्चमी ।

---

षष्ठी पद्धतिः ।

नेत्रैर्मषीमलिनितैर्ददृशुस्तमेव
रथ्यागतं शिवमयत्नत एव नार्यः ।
ज्ञानात्मकेन विमलेन विलोकनेन
यद्वीक्षणाय हृदये यतयो यतन्ते ॥ १ ॥

गौरीकुचक्षपितभस्मानि कापि दृष्टिं
चिक्षेप वक्षसि विभोरभिलाषगर्भाम् ।
तृष्णाग्रह(?)सुलभदुर्लभयोर्विवेके
स्पृष्टास्ति सोऽप्ययमतीव च कापि मेने ॥ २ ॥

स्पन्दैरमन्दजनितैर्मुहुरेव यस्य
संसूचितं झडिति शर्म भविष्यतीति ।
अन्यं निमील्य निबिडं मुदितैव काचि-
द्वामेन तेन नयनेन शिवं ददर्श ॥ ३ ॥

न्यस्ता लिपिः शिरसि येन शरीरभाजां
तस्याप्यजस्य हरपाणिभृते कपाले ।
दृष्ट्वाक्षराणि निपुणा द्रुहिणस्य काश्चि-
देतान्यनेन लिखितानि किलेति मेने ॥ ४ ॥

वक्षःस्थलेऽतिमहति स्मरशासनस्य
स्वस्मिन्पयोधरयुगे च विजृम्भमाणे ।

---

१. 'नूनं जनस्य न करोत्यवकाशदानम्' इत्यपि पाठान्तरं पुस्तक एव लिखितम्. अस्य पूर्वार्धस्यास्फुटार्थता.

कस्याश्चिदीक्षणयुगं विदधे कहृत्त(?)-
मानन्दशोकपिशुनानि गतानि तानि ॥ ५ ॥

आरादुदैक्षत तथा हरकण्ठमूल-
माश्लेषकौतुकवशेन चिराय काचित् ।
तस्या यथा कलितकज्जलदृष्टिपातैः
कल्मो(ल्मा)षितं तदति(?)पार्श्वजनस्य तर्कः ॥ ६ ॥

काचित्करेण मणिदर्पणमुद्वहन्ती
तत्रावलोक्य गिरिशं प्रतिबिम्बलग्नम् ।
कण्ठे कथं मलिनमेति गतं गलस्थं
मुग्धा मुहुर्मुकुर एव मुधा ममर्ज(ममार्ज) ॥ ७ ॥

कुम्भस्थलं कुचतटेन गतेन यान-
मूर्वो युगेन च करं करिणो जहास ।
या पूर्वमद्य किल सा वसिते हरेण
तस्यैव चर्मणि कुतूहलिनी बभूव ॥ ८ ॥

पूर्णेन्दुबिम्बतुलितेन मलेन काचि-
त्प्रीतिं चकार हरहारमहोरगस्य ।
सा तस्य भीतिमपि भीतिनिवृत्तिकण्ठी
सस्मार केशनिचयेन मयूरगङ्कीम् ॥ ९ ॥

कस्याश्चिदीक्षणमलोकविलासलोलं
बिम्बौष्ठरक्तकुमुदे पदपाणिपद्मे ।
सस्ताव(प?)हारिणि हराख्यमहातटाके
सद्यो निपत्य शफरायितमाचचार ॥ १० ॥

आलोक्य लोकविपरीतममुष्य काचि-
त्कङ्कालमंसशिखरे शितशूलबद्धम् ।
कोऽयं क्रमः प्रमहसामिति विस्मयेन
नासानिवेशितकराङ्गुलिरेव तस्थौ ॥ ११ ॥

१. अस्फुटार्थमिदं पद्यम्.

कस्याश्चिदायतदृशो हरकण्ठमूलं
　कण्ठग्रहोत्सुकतयैव विलोकयन्त्याः ।
त्रासावहस्तु न गरो न च हारसर्पो
　यत्पार्वतीवलयपङ्क्तिपदं तदेव ॥ १२ ॥
नेत्रद्वयेन हृतधीः करुणामयेन
　काचित्तृतीयमपि लोचनमीश्वरस्य ।
उन्मीलितं चिरनिमीलितमाचकाङ्क्षे
　सा तं न(तन्न) देवभुवनेन्धनवह्निगर्भम् ॥ १३ ॥
कान्त्या रतिर्भुजगहारतयैव भासा
　शोकश्च दुर्लभतया गरलेन भीतिः ।
केश्च(?) निर्दयतया च यदा कुलाक्ष्या
　नानारसास्पदमजायत शंभुकण्ठः ॥ १४ ॥
अङ्गानि भीषणभुजंगविभूषणानि
　मत्वेतराणि नयनं विनिवर्ति(?) तेभ्यः ।
वक्त्रं स्मिताभरणमीशितुरीक्षमाणां
　बालां रुरोध सहसा प्रति नेत्रपात्रः ॥ १५ ॥
संध्यानभःकपिशभासि विभोः कपर्दे
　काचिद्विलोक्य बुभुदे(बुधे) तुहिनस्य रेखाम् ।
स्रष्टुः कपालशकलावलिसाहचर्या-
　द्दंष्ट्रेव पोत्रिवपुषः पुरुषोत्तमस्य ॥ १६ ॥
शंभोश्चिरं पदयुगे चिरमूरुकाण्डे
　मध्येचिरं चिरमुरस्यधरे तथैव ।
एवं मुहुः कृतपरिभ्रमणान्मृगाक्ष्या
　दृष्टिर्जगाम तृषितेव शिरःस्रवन्तीम् ॥ १७ ॥
गङ्गामवेक्ष्य गिरिशस्य जटाकलापे
　दीर्घोर्मिहस्तकलितेन्दुकलां चिराय ।

इत्थं बभूव किल भर्तरि शैलजाया
दाक्षिण्यपाक इव कापि मुहुः शुशोच ॥ १८ ॥

व्यालोलकेशकलितैककरैव काचि-
त्काञ्चीगुणश्लथनदर्शितनाभिमूला ।
वक्षस्यभीष्टदयिताकुचमुद्रितोऽयं
योगी किलेति गिरिशं कुटिलं ददर्श ॥ १९ ॥

[1]शर्म्माद्भविष्यति ममेति तदीयकम्पै-
र्बुद्ध्वाननन्द यदतीव पुरा वराङ्गी ।
तद्वाममेव नयनं शिवमीक्षमाणा
शर्वाण्यसर्वसमचित्ततया निनिन्द ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये दर्शनपद्धतिः षष्ठी ।

---

सप्तमी पद्धतिः ।

आपादपद्मयुगमा च कपर्दभारा-
दङ्गान्यनङ्गदमनस्य पुरन्ध्रिवर्गः ।
नेत्रैरपाकृतनिमेषकथैर्विलोक्य
कर्णामृतानि वचनानि मिथो बभाषे ॥ १ ॥

नैवान्यदस्ति शरणं चरणारविन्दा-
द्गौरीसखस्य सखि दुःखजुषां जनानाम् ।
यत्पद्म(?)दुर्बलमपि स्वयमन्तकस्य
वक्षो बिभेद दृढमाश्रितरक्षणाय ॥ २ ॥

तारापतीन्सुदति पश्य पिनाकपाणेः
पूर्णानिमान्पदमुपेत्य नखच्छलेन ।
अस्यायमङ्घ्रिकमलाश्रयहानिदोषा-
दद्यापि हन्त कृश एव कपर्दचन्द्रः ॥ ३ ॥

---

१. 'मः पुनः शंभौ' इति हैमानुसारेण 'शं माद्भविष्यति' इति पाठो भवेत्.

जङ्घायुगं सखि विलोकय भूतभर्तुः
संवाहनेषु गिरिजाकरपल्लवेन ।
संजातकण्टकतया प्रतिपद्यतेऽयं
नित्यं पदाम्बुरुहकोमलनालकक्ष्याम् ॥ ४ ॥
कक्षोरगेन्द्रमिह पश्य विभोस्तमेन-
मावेष्टनेन विपुले कलितं नितम्बे ।
येनायमद्य लभते पुरसुन्दरीणां
चित्ताम्बुराशिमथने सखि मन्दरत्वम् ॥ ५ ॥
नाथस्य सुन्दरि विलोकय नाभिगर्त-
मस्योत्तमाङ्गकलिता विबुधस्रवन्ती ।
आवर्तमाशु विरचय्य पुनःपुनस्तं
यत्साम्यदुर्लभतया शिथिलीकरोति ॥ ६ ॥
अङ्गीकृतं यदमुना वसनत्वपक्षे
कक्षोरगेन्द्रफणरत्नमरीचिशोणम् ।
मातङ्गचर्म चिरकालनिकृत्तमेत-
दद्यापि पश्य रुधिराक्तमिवावभाति ॥ ७ ॥
नैसर्गिकालमणि(?)शालिनि पश्य भिक्षो-
र्हैरण्यगर्भमयि पाणितले कपालम् ।
आविष्करोत्यरुणतामरसे विनिद्रे
निद्रावशस्तिमितहंसगतामभिख्याम् ॥ ८ ॥
आलेपनं यदिदमस्य भुजान्तराले
तद्भस्मदिग्धवपुषो मदनस्य मन्ये ।
नो चेत्कथं कथय वीक्षितमात्र एव
संमोहयेत्सखि मनः सकलाङ्गनानाम् ॥ ९ ॥
गौर्या मनोहरभुजाफणयोग्य एव
कण्ठे कथं सखि हरस्य भुजङ्गहारः ।

मन्ये तयान्यवनितासु हृतोपगूढ-
साशङ्कया वसति तत्र कृताभ्यनुज्ञः ॥ १० ॥
शीतं निसर्गधवलं हृदये विहाय
हारं भुजङ्गमतिभीषणमेव धत्ते ।
स्वातन्त्र्यभङ्गभयतः प्रभवः कदापि
कुर्वन्ति हन्त न गुणेष्वपि पारतन्त्र्यम् ॥ ११ ॥
हारायितः सखि हरस्य महाभुजङ्गः
पार्श्वस्थिर्ति[1] मृगदृशां विरुणद्धि भीमः ।
रुन्धे विभुष्वधिकवल्लभतां प्रपद्य
प्रायः प्रियाश्रयणमाशु भुजङ्गवर्गः ॥ १२ ॥
नैल्यं यदस्य गलमूलगतं तदेके
(?)मामग्रणं तुरगमाणिसमेष तर्कः ।
या कापि सिद्धगुलिकैव मृगेक्षणाना-
माश्लेषकौतुकनिषेधनिरूढशक्तेः ॥ १३ ॥
यो मूर्ध्नि मुग्धशशिभङ्गभयेन सोढा
पार्थस्य निर्घृणशरासनताडनानि ।
यो वा करोत्युभयदानमपायकाले
तं पश्य दक्षिणकरं सखि शंकरस्य ॥ १४ ॥
साकूतमन्दहसितोदयलोभनीया-
दास्यादिहास्य सखि संप्रति निर्गतानि ।
देहीति लोकबहुमानविवर्जितानि
याच्ञाक्षराण्यपि महेश्वरतां ध्वनन्ति ॥ १५ ॥
आलोकयैतदखिलेक्षणमालि शंभो-
र्निर्हेतुनिह्नुतमनोभवरम्यदेहम् ।
सर्वेषु जन्तुषु विभुः समदर्शनोऽपि
शाठ्येन यस्य विषमेक्षण एव जातः ॥ १६ ॥

१. 'स्थितिर्मृ' मूलपाठः.

सत्यार्थमेव खलु तद्यदिहाद्रु(द्धु)तस्य
पात्रं भुजङ्गपरिरक्ष(क्षि)तमाहुरार्याः ।
पश्याम्बिकाकलवचोमृतपात्रभूते
कण्ठेऽपि कुण्डलभुजङ्गपरिष्क्रियास्य ॥ १७ ॥

फा(भा)लेक्षणान्तिकचरं सखि पश्य शंभो-
श्चूडाशशाङ्कमतिम(क)र्शितगात्रमेनम् ।
स्वप्रेमबन्धुमदनप्लुषि हव्यवाहे
त्यक्तुं निजामिव तनुं विहितावसायम् ॥ १८ ॥

नासीरपूरणविधौ मकरध्वजस्य
चक्रुर्वचांसि सुलभानि च यानि नार्यः ।
तानीन्दुशेखरभुजं मदनावमानं
सद्यो ममार्जुरपि तस्य वपुः पुरारेः ॥ १९ ॥

सत्यं समाश्रितजनो बहुमानलाभे-
नाप्राप्तवाञ्छितफलोऽपि विभुं जहाति ।
पश्येन्दुरेष कुरुते शिरसा धृतोऽसी-
त्येतावता पशुपतेः कृश एव सेवाम् ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्येऽङ्गवर्णनपद्धतिः सप्तमी ।

---

अष्टमी पद्धतिः ।

No 3661

गौर्याः समक्षमपि यस्य विभोर्विकारं
कर्तुं कथंचिदपि नालमभून्मनोभूः ।
तस्यैव चित्तमपहर्तुमहो विलासा
नानाविधा नगरवामदृशां बभूवुः ॥ १ ॥

पुष्पं कराञ्जलिधृतं चलदुत्तरीया
चिक्षेप कापि पुरतः स्मरशासनस्य ।
एतावदाद्य मयि पुष्पशरेण मुक्तं
पश्यास्त्रजालमिति संशि(शंसि)तुमुद्यतेव ॥ २ ॥

आविश्चिकीर्षुरतुलं निजबाहुमूलं
कन्दर्पमूलधनमीश(शि)तुरग्र एव ।
काचिद्विलोलवलयावलिना करेण
नेत्रान्तिकादलकभारमपाचकार ॥ ३ ॥

एका त्रपापरिभवा सकलप्रवृत्ति-
श्चिक्षेप दृष्टिमबला न तु चन्द्रचूडे ।
प्रायेण तिष्ठति विदग्धविलासिनीना-
मर्धेक्षणेषु मदनः परिपूर्ण एव ॥ ४ ॥

काचिद्विलासचतुरं कतिचित्पदानि
शंभोर्जगाम पुरतो मदमन्थरेव ।
तां वीक्ष्य तादृशगतिं विशिखैः किमन्य-
दात्मन्यपि स्वयमभून्मदनः प्रहर्त्ता ॥ ५ ॥

कंदर्पशत्रुरयमित्यनुरूपयन्ती
सैवापपात पुर एव पुरां विजेतुः ।
इत्यात्मदोषमपरत्र निपात्य काचि-
त्काञ्चीमहो गुरुमयीमपरा निनिन्द ॥ ६ ॥

प्राप्ता स्वगेहमणितोरणमण्डमेका
रथ्यागतत्रिपुरवैरिविलोकनाय ।
किं स्थाणुसंश्रयणमिष्टमिति ब्रुवाणां
पाणिस्थकेलिकमलेन सखीं जघान ॥ ७ ॥

काचित्पुरा प्रणतिकृत्यमशिक्षितापि
गौरीवराय विनयाञ्जलिमाबबन्ध ।
तन्मौलिचन्द्रकिरणैर्मुकुलीकृतेन
लीलाम्बुजेन कृततत्प्रवणोपदेशा ॥ ८ ॥

हीनाङ्गतोपरतमार्गणमोचनेन
प्राचीनवैरकुपितेन मनोभवेन ।

संचोदितेव निशितैर्निखिलेऽपि देहे
विव्याध कापि मदनारिमपाङ्गबाणैः ॥ ९ ॥
प्रस्थानवेगशिथिले सति केशपाशे
काचित्तथैव गिरिशस्य समीपमाप ।
तेन स्मरस्य परिभूतिमपास्य केश-
बन्धो विधेय इति बद्धदृढव्रतेव ॥ १० ॥
येनाकुलेक्षणयुगादरुणेन्दुमौलि-
मान्दोलितेन न विलोकयितुं शशाक ।
लीलाम्बुजेन सहसैव नुनोद काचि-
दात्मालकं चलदलिभ्रम पश्य बुद्धिः ॥ ११ ॥
कण्ठे सकौतुकसमार्पितया तदीये
वव्रे स्वयं पशुपतिं स्वयमेव सद्यः ।
कालाञ्जनप्रणयमेचकया स्वदृष्ट्या
नीलोत्पलारचितमालिकयैव काचित् ॥ १२ ॥
वल्लीव यस्तदधरस्तरुणप्रवाल-
स्तत्रापि निर्मलरुचिस्मितमेव पुष्पम् ।
तस्योद्गमे जनविलोचनभृङ्गसेव्यो
मासो मधुर्मधुसखाविरभूत्क्षणेन ॥ १३ ॥
रथ्योपहारकुसुमस्खलनेन काचि-
त्पादाग्रतोदमभिनीय पुरः पुरारेः ।
आत्मन्यशृङ्खलमनोभवमुच्यमान-
पुष्पास्त्रदुर्विषहतां प्रकटीचकार ॥ १४ ॥
काचित्प्रकोष्ठवलयावलिसंश्रितस्य
लीलाशुकस्य मुखसंक्रमितैर्वचोभिः ।
भिक्षाटनादिलघुकृत्यनिषेधगर्भै-
र्मन्दस्मितोत्तरमयुग्मदृशं चकार ॥ १५ ॥

द्वारि स्थितस्फटिकतोरणदीर्घदण्डं
तुङ्गस्तनाग्रयुगलेन निपीडयन्ती ।
मन्दस्मितानुमितचित्तनिगूढभावा
काचिन्मुहुर्मुहुरवैक्षत चन्द्रमौलिम् ॥ १६ ॥
कस्याश्चिदीशपदवन्दनलालसाया
नासीद्दिवा मुकुलितं करपद्ममेव ।
चूडाशशाङ्ककिरणैः परिभूयमानं
तस्याः करप्रणयकेलिसरोरुहं च ॥ १७ ॥
अह्नाय काचिदनियन्त्रितमेव क्लृप्त-
बन्धश्लथं चिकुरमीश्वरमाससाद ।
कामायमान[1] ............... सन्त-
निःशेषनिर्हरणबद्धदृढव्रतेव ॥ १८ ॥
काचित्कलक्वणितकङ्कणमञ्जुनादै-
रीशं स्ववीक्षणपरं विदधे विदग्धा ।
पुंसां मनोऽभिलषितेषु विलासिनीनां
प्रायेण भूषणरवः प्रथमाभिलाषः ॥ १९ ॥
आचारपुष्पमपरा सितपुष्पमिश्र-
मग्रे विभोः क्षणमवाकिरदानमन्ति(न्ती) ।
लालाटलोचनकृशानुभयादुपात्त-
रूपान्तरेव कुसुमायुधचापयष्टिः ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये विलासपद्धतिरष्टमी ।

नवमी पद्धतिः ।

तैस्तैर्विलासचरितैर्विकृतं न वेति
चित्तं परीक्षितुमयुग्मविलोचनस्य ।
यान्यूचिरे युवतयो वचनानि सार्धं
तस्योत्तरैरनुगुणैः कथयामि तानि ॥ १ ॥

१. अत्र पाठो न दृश्यते.

सख्यं वरेण्यघटितं द्रविणेश्वरेण
    कार्श्यं[1] तथापि किमिदं तव नापयातम् ।
किंचैष सुन्दरि चिराय पयोधरेण
    स्फीतेन ते परिचितः कृश एव मध्यः ॥ २ ॥

सर्वेषु जन्तुषु समं कथमिन्दुमौले
    त्वामेव हन्तु विषमेक्षणमाह लोकः ।
मध्यः कृशोऽपि वहति स्तनयोर्भरं ते
    तस्मिन्वहत्यपि च मध्यमवाद एव ॥ ३ ॥

दोषं विनैव भवतस्तरुणेन्दुमौले
    कस्मात्पुरा विनिहतः करियूथनाथः ।
त्वत्पीवरस्तननिराकृतकुम्भकान्ति-
    र्जीवन्मृतो मयि वराङ्गि मृषापवादः ॥ ४ ॥

आद्यन्तशून्यमिति वेदविदो विदन्ति
    त्वामिन्दुशेखर जगत्युदयान्तभाजि ।
तद्वादमात्रमयमद्य हि दृष्ट एव
    सर्वैश्चकोरनयने तव मध्यलोपः ॥ ५ ॥

उत्पाद्य पावकमयं नयनं ललाटे
    प्लुष्टस्त्वया किमिति शंकर पुष्पकेतुः ।
दृष्टचैव ते यदयमाप पुनः प्रसूतिं
    तं(तच्) चण्डि हासपदमस्म्यहमेवमेव ॥ ६ ॥

मुक्तामय(:) स्फुटमि(म)यं रशनागुणो मे
    धिग्धिग्भयंकरभुजङ्गमकल्पितं ते ।
मुक्तामयत्वमिति[2] चित्त्वमु तस्य बाले
    यः संसजेत्तव नितम्बमजस्रमेव ॥ ७ ॥

---

१. कार्श्यं निःसारत्वम्. २. 'मुक्तामयत्वमुचितं ननु तस्य बाले' इत्येवं पाठोऽत्र आयास्यति.

पूर्णं विहाय कथमेनमनङ्गशत्रो
मूर्ध्ना भवान्वहसि(ति) नित्यकृशं शशाङ्कम् ।
त्वद्वक्त्रकान्तिपरिभूतिमनाकलय्य
पूर्णाद्वराङ्गि वर एव कृशोऽयमिन्दुः ॥ ८ ॥

ये गर्हिता गिरिश तेऽपि भवन्तमेत्य
श्लाघ्या भवन्ति सहसेति सतां प्रवादः ।
रागोऽधरे कुटिलताप्यलके, कृशत्वं
मध्ये, कुचे कठिनता च तथा न किं ते ॥ ९ ॥

वैवस्वतेन दमितः सकलोऽपि लोकः
सोऽपि त्वदीयचरणेन पिनाकपाणे ।
पद्मं शशी जयति भीरु मुखं तवैन-
मेकान्ततो न विजयो न पराजयो वा ॥ १० ॥

देहीति वाचि पदमद्य तवेन्दुमौले
चक्षुः पुनर्मृगदृशां मणिमेखलासु ।
पुंसो रसार्द्रहृदयस्य पुरो वधूनां
वाक्ये च चेतसि च कर्मणि चान्यदन्यत् ॥ ११ ॥

एतेन भैक्षचरणेन जगत्कुटुम्ब-
त्राणक्षमा पशुपते किमलाभि पूर्तिः ।
पूर्णो न किं प्रतिदिनं त्वयि भिक्षमाणो
लावण्यमाननगतं प्रतिपच्छशाङ्कः ॥ १२ ॥

अग्रेसरस्त्वमसि नाथ विलासभाजां
भिक्षामटस्यपि कथं त्वमपास्तलज्जः ।
स्वच्छन्दवीक्षणवचांसि पृथग्वधूषु
कर्तुं न भैक्षचरणादपरोऽप्यु(स्त्यु)पायः ॥ १३ ॥

एतानि नाथ वचनान्यमृतोपमानि
कण्ठादुपात्तगरलादपि निर्गतानि ।

स्वादिष्ठता वचसि वक्र(क्तृ)गुणैर्न जाता
श्रोतुर्जनस्य गुणवत्त्वनिबन्धनैव ॥ १४ ॥
क्रीडापरः कथमसि त्वमनादिवृद्धो
मुग्धासु भैक्षचरणच्छलतो वधूषु ।
यः संगमो युवतिभिर्जरयातुराणां
तं सूरयो ज्वरणभैक्षजमामनन्ति ॥ १५ ॥
धिक्त्वां भुजङ्गमयस्तव यस्य हारो
मुक्तामयस्तव न किं मर्म पश्य नाथ ।
मुक्तामयत्वमुचितं ननु तस्य बाले
पीनस्तनेन कृतसंगमनिर्वृतस्य ॥ १६ ॥
अन्यत्र यातमपि मानसमीश किं ते
नैवाददासि बलिमद्य नच प्रयासि ।
धत्ते गुरुस्तनभरः कलकण्ठितस्य
तद्दक्षिणीकृतमिदं हृदयं मया ते ॥ १७ ॥
धिक्कार्ष्ण्यमीश भवतो मुखपूर्णचन्द्रे
भ्रष्टं तदेव गणयामि गलस्थमेतत् ।
रागोऽधरे सुदति यः स तवाननेन्दो-
राभासि(ति) संचित इवोदयशोणभावः ॥ १८ ॥
मध्यस्थमीश कथयन्त्यखिला भवन्तं
कस्मादकारि भवता स्मरदेहदाहः ।
पुंसां करोति मदिराक्षि नितान्तपीडां
मध्यस्थमेव कथमद्य वलित्रयं ते ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्य उत्तरप्रत्युत्तरपद्धतिर्नवमी ।

---

दशमी पद्धतिः ।

प्रत्यालयं कृपणवज्जगतामधीश
देहीति दीनपदवादिनि भिक्षमाणे ।

वामभ्रुवां मनसिजावस(श)मानसानां
भिक्षाप्रदानचरितान्युपलालयामः ॥ १ ॥

काचित्पुरः पुररिपोरतिसंभ्रमेण
भिक्षामपात्रपतितामवबुध्य सद्यः।
अन्तर्भयेन विदधे हृदये कराग्रं
भिक्षाहमस्मि भवतो भगवन्नितीव ॥ २ ॥

प्रेम्णापि याचितनिदानविरोधिता तु
दर्वीं दधत्यपि करेण समृद्धसिद्धाम्।
भैक्षाटणा(ना)न्तमपरा गिरिशेन योगा-
न्निश्चित्य कालहरणं कपटैश्चकार ॥ ३ ॥

सत्पात्रदानविधिना यदनेन पुण्यं
तन्मे तवैव कृशभावमपाकरोतु।
इत्येवमिन्दुशकलाभरणाय काचि-
द्भैक्षेण पुण्यमपि दानभवं दिदेश ॥ ४ ॥

आदातुमैच्छदधिकं गिरिशो न भैक्षं
पात्रं वधूः सपदि पूर्णमियेक्ष(ष) कर्तुम्।
आयस्तयोर्युवतिशंकरयोर्बभूव
भिक्षाप्रदानसमये सततं विवादः ॥ ५ ॥

दर्व्याः परिच्युतमिदं तमियं च हस्ता-
द्दानादयं तदपि दुर्लभसंप्रदानात्।
अश्रान्तमेव गिरिशान्तरपल्लवेन
कस्याश्चिदायतदृशो सितपुष्पकेन(ण) ॥ ६ ॥

आयाहि तिष्ठ जहि भीमभुजङ्गहार-
मेनं गलात्तदनु भैक्ष्यमिदं गृहाण।
इत्येव ईश्वरमपेक्षितभैक्ष्यदाना-
त्प्रागेव कापि निजकिंकरतां निनाय ॥ ७ ॥

एका कथंचन चिरेण विनम्रवक्रा
लज्जावशेन गिरिशाय दिदेश भिक्षाम् ।
दानोन्मुखस्य च गुणाभ्यधिके निकृष्टे
याच्ञापरस्य च समस्त्रपया विकारः ॥ ८ ॥

धिग्याचनं जगति सन्निहितावमानं
भैक्ष्यं प्रदेयमिति[1] प्रार्थयते महेशः ।
कामद्रुहेन(?) खलु देयमिति स्ववाचा
प्रत्यादिदेश पुर एव हि तस्य काचित् ॥ ९ ॥

यो भिक्षते प्रतिगृहं भुवनेश्वरोऽपि
तस्मै च या सकरुणैव ददाति भिक्षाम् ।
तावन्ववेक्ष्य गिरिशं [च] सखीं च काचि-
त्तामेव सर्वसहतां जगते जगर्हे ॥ १० ॥

दर्वीमुखं द्रुतगतिच्युतसिक्थमेव
काचिन्मुधैव निदधे हरभैक्ष्यपात्रे ।
तस्याः पुनः परिहृतो(तौ) किरति प्रकोष्ठा-
द्भिक्षाकपालपतितैर्वलयैः प्रमादः ॥ ११ ॥

भिक्षां प्रदातुमपरा शमनान्तकस्य
वेगादुपान्तमुपसृत्य बभूव तूष्णीम् ।
दानादधःकृततदीयकरारविन्दा-
च्छ्लाघ्यं विमुद्य(बुध्य) जनशोच्यमदानमेव ॥ १२ ॥

आहूत एव चरितो विधृतान्नदर्व्या
भिक्षुः कयापि गिरिशो न कृतः कृतार्थः ।
दोषावरन्नि(रं नि)रवधेर्विरहासहिष्णोः
स्नेहस्य किंचिदपि चारुदृशो न तस्याः ॥ १३ ॥

भिक्षां प्रदातुमभिवाञ्छय पुमानमुष्मै
कङ्कालवेष इति बन्धुविबोधितापि ।

---

१. 'मिदम्' इति मूलपुस्तकपाठः.

नैव न्यवर्तत वि(व)धूः शिवभैक्ष्य(क्ष)दाना-
द्धर्मात्मना परिणतो ननु काम एव ॥ १४ ॥
यावन्न निर्गलति देहि वचोऽस्य वक्त्रा-
त्तावद्ददौ झटिति कोऽपि शिवाय भैक्षम् ।
देहीति दीनपदनिर्गमयत्नमूल्यं
नालं जगत्त्रितयमर्थिजनाय दत्तम् ॥ १५ ॥
यो दक्षिणः पुरजितो विततार भिक्षां
कस्याश्चिदाशु वलयैः स करोति हीनः ।
हा हन्त दैवतमिति क्रमकारि वामः (?)
संरक्षितो वलयवाङ् मलिनालकायाः ॥ १६ ॥
भिक्षोदने स्थलनिपातिनि कापि शंभो
पात्रं न सम्यगिति पाणिगतं जगर्हे ।
आत्मीयदुष्करणहेतुकयैव मर्त्यैः
सर्वैर्विधेः शिरसि पात्यत एव दोषः ॥ १७ ॥
मा गच्छ शंभुमिति मातृनिवारितापि
भिक्षाप्रदानमपदिश्य जगाम काचित् ।
धर्मप्रतीपगतिरप्यभवत्तदानी-
मालम्बनं मनसिजस्य विचित्रमेतत् ॥ १८ ॥
काचित्करेण दधती गुरुभैक्ष्य(क्ष)गर्भां
दर्वीमियाय हरपार्श्वभुवं न यावत् ।
स्नेहोज्ज्वलां मनसिजः स्वयमेव भिक्षां
तामेव तावददिशत्परमेश्वराय ॥ १९ ॥
पात्रोत्तमस्त्वमसि नायक पाणिलग्नं
पात्रं तथापि न पवित्रमिदं कपालम् ।
यावन्न तत्त्यजसि नैव ददामि ताव-
दिये(त्ये)व कापि गिरिशाय ददौ न भिक्षाम् ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये भिक्षाप्रदानपद्धतिर्दशमी ।

एकादशी पद्धतिः ।

भिक्षाप्रदानसमये वनिताजनस्य
शोकेन शंभुमधिकृत्य वचांसि यानि ।
तस्योत्तराण्यपि तया(था)नुनयान्वितानि
वक्ष्यामि तानि विदुषां श्रवणोत्सवाय ॥ १ ॥

भिक्षाटनादिकममङ्गलचेष्टितं ते
किं नाथ सापि सहते गिरिराजपुत्री ।
यद्यत्करोत्यविनयं जगतीह भर्ता
साध्वी वधूरनुगुणैव हि तस्य तस्य ॥ २ ॥

भिक्षाटनं यदि न ते विहृतिप्रवृत्तं
याचस्व भूरि पुरशासनमेव(?) भैक्षम् ।
लोकेऽत्र लोभबहुले मितमेव याच्यं
तावानलाभसमये भविता विषादः ॥ ३ ॥

भिक्षानसाध्यमभियेभिपिनाकपाणे[1]
रुच्यावहं तव तदेव हि कालकूटम् ।
यद्याचितं कृशजनेन तदाशु देयं
दात्रा कदाचिदपि नास्य फलं विचार्यम् ॥ ४ ॥

सर्वेष्टसिद्धिफलमीश्वर····धनेशो
याच्यस्त्वया प्रियसखो नतु भिक्षितव्यम् ।
वित्तान्धदुर्मुखनिरीक्षणभीतिभाजां
भिक्षाबलं प्रति निकेतम(न)दैन्यलभ्या ॥ ५ ॥

सर्वाः कला वदनतो भवतः प्रवृत्ताः
किं तासु काचिदपि नाथ न पोषहेतुः ।
अन्यैव कापि धनिनां द्रविणात्मिका श्री-
र्विद्यात्मिका च विदुषामपरैव लक्ष्मीः ॥ ६ ॥

---

१. 'भिक्षान्नसाध्यमभिधेहि पिनाकपाणे' इति पाठो भवेत्.

किंचिन्मुहूर्त्तमिह तिष्ठ विभो मदीयं
गेहं प्रविश्य पुनरेत्य ददामि भिक्षाम् ।
अभ्यर्थिनामभिमतस्य चिरेण लाभा-
दभ्यर्हितः सपदि नास्ति प(य)दस्य लाभः [1] ॥ ७ ॥
तां तां समृद्धिममराहवतो भवन्ते
भिक्षाटनव्यसनमीश मि(कि)मर्थमेतत् ।
नीचैः कदाचनमस्थिति(?)रन्यदोच्चै-
रप्येकदा भवति देहभृतामवस्था ॥ ८ ॥
यत्केवलं तव कराग्रकरोटिपात्र-
मद्याप्यलाभि भवता न किमत्र भैक्षम् ।
उत्साहसंततिकृतामपि देहभाजां
लाभो न यत्नमनुधावति भाग्यहीनम् ॥ ९ ॥
मागाः परत्र भवने भव पात्रमद्य
भिक्षोदनैरहमिदं तव पूरयामि ।
वाचां मुधा कुसुमिता विदधाति लोकः
किंचित्तुला फलति नार्थिषु दीर्घतोऽपि ॥ १० ॥
संपन्नमन्नमखिलेश्वरभैक्षमात्रं
तुभ्यं ददातुमियदेतदपत्रपेऽहम् ।
निर्णीतमेतदखिलार्थिजनेन दाने
देयस्य काललघुता लघुतां क्षिणोति ॥ ११ ॥
भैक्षार्थिना प्रतिगृहं चरता त्वयैव
न स्थीयते किमिति हन्त मुहूर्तमात्रम् ।
एकत्र पुष्कलमलब्धवतां स्वकाम्यं
क्वापि स्थितिर्मधुलिहामिव दुर्लभैव ॥ १२ ॥
दास्यामि भैक्ष्यमखिलेश दिने परस्मि-
स्तुभ्यं हतेन विधिना गलितोऽन्नकालः ।

१. भू प्रायशावात्मनेपदी.

संप्रीयतां स खलु नाम तया त्वदुक्त्या
(?)यस्यात्मनः स्थिरमति त्वमिवातनोति ॥ १३ ॥
कालात्ययेऽद्य भवता गृहमागतं मे
नास्त्येव भैक्षमखिलेश किमत्र कृत्यम् ।
नास्तीति यो वदति भिक्षुसमक्षमेव
सद्भावमात्मनि निषेधति नैव देये ॥ १४ ॥
अप्रापणे वदनमेति यथा विकासं
भैक्षस्य नैव हि तथा तव तस्य लाभे ।
वाञ्छाम्यलाभमहना(मा)यतलोचनाभ्यः
सद्यो वियोगविपदाहत एव लाभः ॥ १५ ॥
स्वामिन्मया पुरत एव विखण्डितांशो
भूयोऽपि मां किमनुधावसि भैक्षकामः ।
भृङ्गः परामुकुलनेन विमोघकामः
पुष्पं नु किं पुनरुपैति विकासशङ्की ॥ १६ ॥
तुभ्यं ददामि कथमद्य वरेण्य भिक्षां
तां स्वीकरोति कथमेव भवानलज्जः ।
दाता यथारुचि ददात्यमितं मितं वा
गृह्णाति वस्तु मितमप्यम(ग)तिर्दरिद्रः ॥ १७ ॥
इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये दीनोक्तिपद्धतिरेकादशी ।

---

द्वादशी पद्धतिः ।

बध्नाति मे प्रथमवैरिणि पक्षपात-
मेवं जनोऽयमिति जातरुषा स्मरेण ।
निःशङ्कविद्धहृदयस्य वधूजनस्य
यत्पारवस्य(श्य)हृदयं तदुदीरयामः ॥ १ ॥
भूतैः किमन्तिकचरैः सहसा गृहीता
दष्टा शरीरकलितैरुत पन्नगेन्द्रैः ।

का(क्रा)न्ता स्विदस्य गलकालगरोष्मणेति
काचिच्छिवस्य पथि संदिदिहे सखीभिः ॥ २ ॥
भूषोरगानविगणय्य विभोरुपान्ते
कापि स्थितैव निजबन्धुनिवारितापि ।
किं धाष्टर्यमेतदुत मौढ्यमहो स्विदस्या
भक्तिर्वरा किमु मनोभववैभवं वा ॥ ३ ॥
आलोक्य दृष्टिररुणा प्रथमास्त्रगाक्ष्या(?)
गौरीकुचाघणकिणोरसमिन्दुमौलिम् ।
पश्चादुदश्रुसलिलाभवदग्नितप्ता
मारस्य दत्तनिशिताश्रुजलेव शक्तिः ॥ ४ ॥
अस्त्रं विमुच्य निखिलं प्रथमं प्रयोगे
भूयोऽपि वेद्धुमबलां विहितोद्यमस्य ।
अल्पायुधस्य वपुरेव तदीयमेकं
लक्ष्यं च हस्तशरधिश्च तदा बभूव ॥ ५ ॥
पादेन किं फणिगणे चकितं नितम्बे
शंभोः करे विवशमग्रसरे सपात्रे ।
आधूसरं भसितलेपिनि बाहुमध्ये
स्नातुं शिरः सरिति चित्तमधीरदृष्टेः ॥ ६ ॥
काचित्पृथुस्तनभरे गलितोत्तरीये
व्यत्यासभङ्गिनि हितेन भुजद्वयेन ।
आलिङ्गनं हृदयदेशजुषः शिवस्य
कर्तुं समीप्सितवतीव चिरं चकासे(शे) ॥ ७ ॥
पुष्पं विकीर्य गिरिशाय पुरैव पश्चा-
त्सर्वो जनः श्रयति बन्धविमुक्तिमन्यः ।
वेणीभरो मृगदृशः प्रथमं विमुक्तो
बन्धात्पुनः पुरजिते कुसुमान्मुमोच ॥ ८ ॥

आत्मानुबन्धिरशनागलनाद्यवद्य-
मन्यास्वपि क्षणमवेक्ष्य हराग्र एव ।
काचित्त्रपापरिभवान्न ययौ तदानीं
लज्जावहो न खलु जात्यविशेषभावः ॥ ९ ॥
आलिङ्गनाद्दु(द्दृ)तमना गिरिशं विलोक्य
रोमाञ्चकण्टकितमूर्तिरजायतान्या ।
रोगेण पुंसि निहितासु(?)च तादृगेव
प्रायेण तत्तदुपभोगसुखं करोति ॥ १० ॥
कस्याश्चिदार्द्रघनचन्दनपङ्किलायां
संवर्धितं स्तनभुवि स्मरकर्षकेण ।
रोमाच(ञ्च)सस्यममितिश्रमवारिसिक्तं
भेदस्तु नाभवदयं खलु दीर्घतन्त्रः ॥ ११ ॥
छिन्नस्तनांशुकग(गु)णा भर(व)संनिधाने
प्रीत्या यदायतदृशो न तदद्भुताय ।
योषिद्गुणा नियमिता विधिनैव तस्या
लज्जादयः सपदि यत्त्रुटिता बभूवुः ॥ १२ ॥
आसीत्परा सपदि तस्य कृतान्तशत्रो-
रालोकनादनिमिषेति किमत्र चित्रम् ।
यस्य क्षणस्मरणमात्रवशेन मर्त्या
यत्नं विनाप्यनिमिषत्वपदं लभन्ते ॥ १३ ॥
च्योतत्सखीवसनरक्षणदत्तहस्ता
विस्रंसिनी(नि) स्ववसने पुरतः पुरारेः ।
अन्या पुनः क्षणमजायत दत्तमूढा
नाम्ना[१] वने विगणने पररक्षकाणाम् ॥ १४ ॥
कस्याश्चिदुत्तरदुकूलविलोलदृश्य-
माभोगतः कुचयुगस्य विनिर्जगाम ।

१. 'नात्मावनं विगणितं पररक्षकाणाम्' इति भवेत्.

अन्तर्गतं झटिति वक्तुमिवेन्दुमौलिं
रोमाञ्चमन्तिकगताय सखीजनाय ॥ १९ ॥
बन्धश्लथः कचभरः प्रबलाश्रु नेत्रं
कम्पोत्तरं कुचयुगं गलदुत्तरीयम् ।
विस्रस्तकाञ्चि जघनं चरणां प्रयाणे
शक्तेतरः(त्) मृगदृशो हरदर्शनेन ॥ १६ ॥
हस्तः कयापि गलितांशुकवारणाय
व्यापार(रि)तो वलयविच्युतिदैन्यपा(मा)प ।
धत्ते(यत्ने) कृते शमयितुं विनिपातमेकं
हानिं परामपि विधिर्विदधाति वामः ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये पारवश्यपद्धतिर्द्वादशी ।

---

त्रयोदशी पद्धतिः ।

कन्दर्पमुक्तशितबाणपरम्पराभिः
शंभोः शिरः प्रहृतचित्तमवेक्ष्य सख्यः ।
नारीजनं निजगदुर्वचनानि यानि
रम्याणि सन्तु रसिकश्रुतिपारणाय ॥ १ ॥
मुग्धे स्मरार्ति पिशुनं वसनाञ्चलेन
रोमाञ्चमाव्रण(वृणु) पुरः पुरसुन्दरीणाम् ।
लोकः परस्खलनदर्शनदीप्य(र्घ)चक्षु-
र्जात्यन्ध एव निजदोषनिरीक्षणेषु ॥ २ ॥
यत्पूर्वमात्तविनयाञ्जलिरीशपार्श्वे
भूयाः सदेति मुहुरालि मयापदिष्टम् ।
तस्यावधीरणफलं वलयच्युतिस्ते
क्षेमंकरो भवति किं न शिवे प्रणामः ॥ ३ ॥
कामं विलोकय कृशोदरि कामशत्रुं
मा भूदयं तव मुखाम्बुरुहे विकासः ।

आविर्भवत्यभि(हि)मभासि विकासमात्रा-
त्तत्प्रेयसीति नलिनीं न किमाह लोकः ॥ ४ ॥
आमीलनेन कमलस्य मधुव्र(व्र)तानां
स्वच्छन्दचारविहृतिस्त्वयि सान्यथैव ।
दुर्लेपिशंकरमुखाम्बुरुहेऽपि लीनः
शक्तोऽनुगन्तुमपरत्र कटाक्षभङ्गः ॥ ५ ॥
वासच्यु(श्च्यु)तं तव सखीत्यभिधीयमाना
नीलं हरस्य गलमूलमिति ब्रवीषि ।
उन्मादिनां जगति नूनमपार्थजल्पा-
दल्पान्तराणि मदनातुरभाषितानि ॥ ६ ॥
शंभोः समीपमुपगच्छसि निर्विशङ्कं
मुग्धे मनोभवभवेन मतिभ्रमेण ।
हाराहिमस्य न निरूपयसि क्षुधार्तं
द(दु)ग्धं च ते मुखमिदं शशिनिर्विशेषम् ॥ ७ ॥
स्रस्तोत्तरीयमधुना कुचमण्डलं ते
पाहि(णि)द्वयेन पिदधासि यदम्बुजाक्षि ।
तत्साधु संप्रति पुनर्वलयोज्झितस्य
तस्याभि‥‥सखि केन तिरस्क्रियास्तु ॥ ८ ॥
नेत्रद्वयं हरविलोकनलाभमान्यं
सर्वेतरेन्द्रियगतौ गमितेव शक्तिः ।
स्पर्शं न वेत्सु(त्सि) मुहरङ्गुलितापि(डि)तापि
नाह्वानशब्दमपि यत्सखि मे शृणोषि ॥ ९ ॥
सर्वाङ्गवीक्षणमनोभवभाग्यहीना
नूनं त्वमस्य गिरिशस्य किमद्य कुर्मः ।
वक्षःस्थले प्रथममस्य दृशं निमग्ना-
मुद्धर्तुमेव निपुणासि न यत्नतोऽपि ॥ १० ॥

नैवाद्य कान्तिविलयो वपुषीश्वरस्य
संकोचनं न तव नेत्रयुगे प्रसङ्गि ।
अभ्यासमद्य सखि पश्यसि रोषरूक्षं
पश्यन्तु ता अपि वृषध्वजमादरेण ॥ ११ ॥
ईर्ष्याकठोरमसकृत्त्वमवेक्षसे कि-
मन्योऽपि तं कमपि पश्यतु भीरुवर्गः ।
मोहेन शंकरविलोकनसंभवेन
श्वासं न [1]किंचिदपि मुञ्चसि तारकाक्षि ॥ १२ ॥
भृङ्गास्तदीयवरसौरभलाभलोला-
द्यलेन(यत्ते. न)संप्रति तवाननमाश्रयन्ते ।
मा मे खलेति मम वा वनमाकलय्य
बद्धा तदा क्व गलिता मणिमेखला ते ॥ १३ ॥
[2]..........................................
.......................................... ।
यो मूढधीः स्वयमयं पुनराप्तवाक्यं
न श्रद्दधीत यदि तस्य विपत्तिरेव ॥ १४ ॥
काञ्चीगुणः पततु काममसौ नितम्बा-
देतानि रत्नवलयानि च बाहुयुग्मात् ।
एतत्तु मे व्यसनमालि सहैव तैस्तै-
र्लज्जामयस्य सहजाभरणस्य पातः ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये पारवश्योक्तिपद्धतिस्त्रयोदशी ।

---

चतुर्दशी पद्धतिः ।

श्लाघ्येन भैक्षचरणेन चिरं विहृत्य
रथ्यासु कालदमने गमनप्रवृत्ते ।
जातानि तस्य पुर एव नितम्बिनीनां
विश्लेषभीतिकलुषानि(णि) विचेष्टितानि ॥ १ ॥

---

१. अस्योत्तरार्धस्यार्थोऽस्फुटः. २. अस्य पद्यस्य पूर्वार्धं न दृश्यते.

गन्तुं प्रवृत्तमवलोक्य वृषाङ्कमेका
बालाम्बु नेत्रयुगुले प्रचुरं बभार ।
तस्यास्तदीयनयनानि पुनर्विदाहा-
त्रस्यन्निव क्षणमलक्ष्यत पञ्चबाणः ॥ २ ॥
साकूतमैक्षत हरं मुहुरेव काचि-
द्विश्लेषवन्दननिमीलनपादपद्मा ।
संज्ञां सरोरुहनिमीलनयोग्यकाले
भूयः समागममवेक्ष्य वितन्वतीव ॥ ३ ॥
मन्दस्मितैरकलितोत्तरमीशमन्या
देहीन्द्रनीलमिति कण्ठगरं ययाचे ।
आगामितं झटिति तीव्रवियोगतापं
तेनैव कर्तुमभिवाञ्छच किलाढ(ढ्य)बुद्धिः ॥ ४ ॥
[१]काचित्पतिं गतिविषक्तमवेक्ष्य चिह्नैः
का मां तथास्त्वथ च कापि ममास्ति मीति ।
एते गमे हृदयगेहमहं प्रविष्टो
मां निर्गमेदिति विलोचनमामिमील्य ॥ ५ ॥
मा गा इति व्यवसिता वदितुं कयापि
सद्यो निरोद्धुमपि दत्तभुजार्गलेन ।
नानुष्ठितं गमनकाङ्क्षिणि भूतनाथे
ह्रीयन्त्रिणा(ता) भवति नैव मनःप्रवृत्तेः(त्तिः) ॥ ६ ॥
[२]हस्तं मम त्वगलितं वलयं न जाने
भिक्षाकपालमिह नायक दर्शयेति ।
काचिच्चकार हरयानमुहूर्तविघ्नं
भिक्षुः शिवोऽपि परिभूतिपदं जगाम ॥ ७ ॥
वीथीविमोचनगतिव्यवसायमेका
दृष्ट्वा हरं विरहतश्चकिता चकार ।

---

१. अस्यार्थो न स्फुटः.   २. आद्यपादस्यार्थोऽस्फुटः .

तत्संनिधावपि निमील्य निमील्य चक्षु-
र्यत्नेन भावितदवीक्षणसाम्यशिक्षाम् ॥ ८ ॥
तावत्त्रयात्वरितपार्श्वगतिं मृ(तिर्मृ)गाक्ष्या
तावच्छलादसकलानि विलोकितानि ।
वीथीपरिभ्रमणकेलिविपक्षभूतो
यावत्प्रभोर्निगमने जनिता(ना)भिलाषः ॥ ९ ॥
अन्तर्ज्वरस्त्व(श्व)सितमूर्त्ति(र्मि)तमेव भूया-
न्गण्डस्थले धवलिमा दृशि चान्य(बाष्प)पूरः ।
जाते हरेण सुदृशो विरहप्रतापा-
त्पूर्वं फलं तदनु हेतुरहो विचित्रम् ॥ १० ॥
किंचिन्निरर्गलविनिर्गतबाष्पपूरै-
राशङ्कितं हरवियोगहरं सखीभ्यः ।
दृष्टिर्ममेयमलकच्युतपुष्परेणु-
स्पृष्टेत्यपृष्टवचनैः प्रकटीचकार ॥ ११ ॥
प्रस्थानमिन्दुशकलाभरणस्य काचि-
दासन्नमेव विगणय्य भवेन मुग्धा ।
आदर्शमापतिततत्प्रतिबिम्बहृद्य-
मङ्गेष्वनङ्गविवशेषु मुहुर्न्यधत्त ॥ १२ ॥
भग्नस्य शङ्खवलयस्य ममैतदेक-
मर्थं निराय(प्य) मृगये तदिह द्वितीयम् ।
यन्मूर्ध्नि ते कुटिलभास्वरमेतदद्य
संदर्शयेति वनिता गिरिशं रुरोध ॥ १३ ॥
स्वच्छन्दरागरसिकस्य गतिर्वि(गतिं नि)रोद्धुं
शक्तासि ते मलयमारुततुल्यवृत्तेः ।
अस्याः स्मरार्तिरियतीति सखी प्रदर्श्य
प्रस्थायिनं हरमवोचदुपांशु काचित् ॥ १४ ॥

सद्यः प्रयाणकरुणोद्यमगम्यमान-
नैरस्यमार्द्रयितुमेव मनस्तदीयम् ।
पेतुः पिनाकिनि मुहुर्मृगलोचनाया
बाष्पोदयान्तरितलोचनवीक्षितानि ॥ १५ ॥
काचित्प्रसक्तगमना गिरिशं प्रतस्थे
छायाप्रविष्टवपुषा मुकुरे निधाय ।
तं सर्वथा सुलभमेव विबुध्यमाना
नारी वियोगहरविह्वलतां जगाम ॥ १६ ॥
लीलाम्बुजे मम रमस्व यथेष्टमस्मि-
न्मा गच्छ षट्पद परिभ्रमणेन किं ते ।
इत्याशु कापि गिरिशस्य गतिप्रसङ्गे
भृङ्गाश्रयं गतिनिषेधवचे(?) जगाद ॥ १७ ॥
आशासमुल्लसितपीनपयोधराग्रा
नाम्राधरस्फुरणदर्शितशङ्ककोपा ।
काचिद्बभूव गतिकाङ्क्षिणि नीलकण्ठे
बाष्पाम्बुदुर्दिनमुखी जलदागमश्रीः ॥ १८ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये विश्लेषारम्भपद्धतिश्चतुर्दशी ।

---

पञ्चदशी पद्धतिः ।

स्था(स्थि)त्वा विभोर्जिगमिषोः पथि कातराक्ष्या-
स्तत्प्रस्थितिक्षणनिवारणकारणेन ।
(?) अप्यल्पकां विविषदामहवं य एव(?)
प्रश्नात्मिकानि ललितानि वचांसि चक्रुः ॥ १ ॥
स त्वं पुराण कथयेह ममाद्यं रूपं
सख्या सहैव चिरकालकृतो विवादः ।
यद्भस्म ते वपुषि तद्भवता गृहीतं
दाहे स्मरस्य किमथो न पुरत्रयस्य ॥ २ ॥

---

१. राजदन्तादित्वं कल्पनीयम्.

शङ्कामिमां शमय नाथ पुनर्यथेष्टं
देशं भवान्व्रजतु केन तथा विरोधः ।
दाक्षायणीपरिणयप्रणयेऽपि किं ते
पाणिः फणीन्द्रपु(प)रुषोऽयमथान्यथा वा ॥ ३ ॥

पृच्छाम्यहं किमपि नाथ भवन्तमेत-
द्ब्रूहि द्वयोरपि तयोरधिकः क एव ।
अन्विष्य यस्तव वराहमलाभखेदो
व्याधाकृतेः सुचिरमस्य च यो भवन्तम् ॥ ४ ॥

स्वामिन्मदीयहृदये चिरकाङ्क्षितोऽयं
कार्यस्त्वया सपदि विप्रतिपत्तिलोपः ।
देहीति यत्प्रथमथाब्धिभवं विषं वा
जिह्वाग्रदुःसहमुदीरय किं तयोस्ते ॥ ५ ॥

जिज्ञासया हृदयमाकुलितं तथापि
पृच्छामि तत्कथय नायक तथ्यमेव ।
किं ते कपालमनिशं दयतः करस्य
किं वानुगेहमदतश्चरणस्य यत्नः ॥ ६ ॥

याचे भवन्तमधुना मधुबन्धुशत्रो
शङ्कामिमां प्रशमयातिचिरानुषक्ताम् ।
त्वद्भक्तयोर्वद पुलिन्दमुकुन्दयोस्ते
नेत्रं यदेतदधिकं कतरेण दत्तम् ॥ ७ ॥

अभ्यर्थये भव भवन्तमपाकुरुष्व
दीर्घं विवादमनुयुक्तविबोधनेन ।
का वल्लभा तव हिमालयजह्नुपुत्र्यो-
र्भोगेन किं परिणता शिरसा धृता वा ॥ ८ ॥

अस्त्येव यानविहतीभ(तिर्भ)वतस्तथापि
संदेहमद्य निरवद्य निराकुरुष्व ।

सर्पैरलंकृतिरियं किमु कान्तिदर्पा-
त्किं सर्वयोषिदुपगूहनशङ्कया वा ॥ ९ ॥
पृच्छाम्यहं किमपि नाथ भवन्तमद्य
तथ्यं निगद्य कुरु मामपि वीतशङ्काम्।
चापाहतिः किमनतिः शिरसा स्वयं वा
कामस्य दाहसमये तव कोपहेतुः ॥ १० ॥
यत्सत्यमत्र वद निश्चयहेतुहान्या
सोद्यो(दी)यते मम मतिश्चिरकालसे(मे)व।
किं ते श्मशानमसिते किमु सर्पहारे
सर्वस्वबुद्धिरुत भैक्षकपाल एव ॥ ११ ॥
एतत्कुतूहलवशेन ममास्ति किंचि-
द्विज्ञाप्यमद्य भगवन्भव सावधानः।
किं ते गलस्य यदि वा विबुधाङ्गनानां
कण्ठस्य भूषणमवेक्ष्य विषोपयोगः ॥ १२ ॥
वा मिश्रणं कुरु मदीयवचोभिरद्य
संदिग्धवस्तुकथनेन शशाङ्कमौले।
मूर्ध्ना नतिस्तदपि लोध्रुमलक्तरागं
गौर्याः पदे किमुत वज्रशिखोपरागम् ॥ १३ ॥

इत्युप्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये प्रश्नोक्तिपद्धतिः पञ्चदशी।

---

षोडशी पद्धतिः।

भिक्षाटनव्युपरमे सति वा(या)न्तमीशं
या विप्रयोगभयदुस्थि(:स्थ)तया न जग्मुः।
तासां सरोरुहदृशामनुयानकाले
यच्चेष्टितं तदपि मां मुखरीकरोतु ॥ १ ॥
पूर्वाङ्गमङ्गजरिपो प्रतिनेत्रपात-
व्रीडाद्विलोकन(कित?)वती न पुरा न बभ्रुः(नवभ्रूः?)।

पश्चादपश्यदपराङ्गमनुव्रजन्ती
सर्वाङ्गवीक्षणमहोत्सवभाग्यहीना ॥ २ ॥
आन्दोलिताममरसिन्धुतरङ्गपातै-
रिन्दोः कलां शिरसि कापि विलोक्य शंभोः ।
एषा पतिष्यति पतिष्यति संप्रतीति
तत्स्वीकृतव्यवसितात्तमनु प्रतस्थे ॥ ३ ॥
तस्या[1] द्विदन्तिकसखीभिरुपेक्षितायाः
सख्यो न वा बत हरानुगमे बभूवुः ।
एका दृढा व्यवसितिर्महती वरान्या
काचित्कठोरगुरुवर्गनिषेधशङ्का ॥ ४ ॥
काचित्स्वबन्धुजनमेकपदे विहाय
रथ्यासमागतमनाकलितान्ववायम् ।
(?)भिक्षां विरूपनयनं वनितां विहाय
कामश्चिरं प्रणयमाहव(वह)ति क्षणेन ॥ ५ ॥
काचिज्जनस्य पुरतो मनसाध्यवस्य
मुग्धेन्दुचूडमनुगन्तुमुदश्रुनेत्रा ।
सा युध्यतोरथ जयार्थतयार्गलाभू-
दुद्रिक्तमानमदनद्विपयोर्मुहूर्तम् ॥ ६ ॥
गच्छन्तमन्तकविपक्षमनुव्रजन्ती
धात्र्या कथंचिदपि कापि निवारिताभूत् ।
चक्रेऽथ केवलमियं मनसा नु यात्रां
वल्ली यथा सुमनसा मलयानिलस्य ॥ ७ ॥
गौरीपतेरनुगमेन किमित्युदीर्य
पूर्वं पुनस्तु वचनैर्विहितानुयात्राम् ।
तच्चित्रमासवचनैर्वनितार्थमूढै-
रित्यात्मनः प्रियसखीमपरा चुकोप ॥ ८ ॥

---

१. 'कस्याश्चिद' इति पाठो भवेत्.

प्रते(?) बलिग्रहणकर्मणि कापि बाला
  यातुं प्रवृत्तमवगम्य पिनाकपाणिम् ।
एष्यं निशाघनतमस्यभिसर्तुमीशं
  चूडेन्दुयाचनपरा चिरमन्विधा(या)य ॥ ९ ॥

एका रहस्यभिमतं किल वक्तुकामा
  दीर्घां विभोरनुगतिं विदधे मृषैव ।
सा किं करोतु सकलास्वपि चात्मनैव
  तुल्याभिलाषगमनासु विलासिनीषु ॥ १० ॥

एषा भविष्यति मनोभवसायकाना-
  मद्यैव प(पा)त्रमिति तां सहसा विहाय ।
तस्याश्चिदीशमपयान्तमियाय चेतो
  नैवाप्तिरापदि फलाय नपुंसकेन ॥ ११ ॥

काचित्प्रयान्तमनुगम्य पतिं जवेन
  बाला पदानि कतिचिन्न पुनः शशाक ।
(?)मुक्तास्त्वया दिशमनेन गतामवेक्ष्य(?)
  श्वासानिल(ला)स्तमनु दूरपथा(?)नुजग्मुः ॥ १२ ॥

(?)नासादवाप्य नु मतिन्नसकी चलध्वा
  संवाधिका न च तथाभ्युदितोऽस्य देशः(?) ।
काचित्तथाप्यनुजगाम हरं प्रयातं
  नत्वापि हन्त गणना मदनातुराणाम् ॥ १३ ॥

संतर्जिताभि(पि) गुरुभिः कृतसत्व(सान्त्व)नापि
  जीवोपमैः परिजनैरनुयाचितापि ।
जातैश्च कापि हसिताप्यनुशोचितापि
  मध्यस्थितैर्न गिरिशानुगतिं मुमोच ॥ १४ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्येऽनुगमनपद्धतिः षोडशी ।

---

सप्तदर्शी पद्धतिः।

सर्वेश्वरोऽपि निजशासनहानिदोषा-
ङ्ग्रामेषु भैक्षचरणादिषु यः प्रयत्नः(त्तः)।
आधातुमस्य विनयं गिरिशस्य चक्रुः
शिक्षावचांसि दृढभक्तिवशेन नार्यः॥ १॥

एतद्विभो जहि कराग्रकरोटिपात्र-
मेवंविधात्मवधपातकसूचकं ते।
कर्मायशस्यमबशापतितं स्वकीयं
नाश्लाघयत्यनुगृहं जगति त्वदा(द)न्यः॥ २॥

दाता जनोऽस्तु भवने भवतोऽप्यनेकः
कामं तथापि न फलाय तवार्थितोऽयम्।
रत्नाकरोऽपि विधिना यदि नाम शुष्ये-
त्कस्तस्य पूरणविधानपरः पयोदः॥ ३॥

भिक्षाटनं तव न यद्यपि वर्जनीयं
देहीति मा वद कदापि शशाङ्कमौले।
अभ्यर्थिनामवनताननदुद्रुयैव(?)
दाता ददाति नहि······गिरापि लुब्धः॥ ४॥

आमो(त्मो)परोधविरसा करुणा न जातु
भूयादितः प्रभृति ते कृपणामरेषु।
चक्रे निसर्गविमलस्य त एव कण्ठे
कार्ष्ण्यं वृषध्वज यदीयविपाकदोषः॥ ५॥

गीर्वाणलोकसरिता सह नित्यमेना-
मह्यावलिं शिरसि मा बिभृयाः पुरारे।
त्वयं(य्य)क्रमाकलितविश्वपदार्थवर्गे
मा भूत्कदापि न विशेषविदित्यवद्यम्॥ ६॥

भीमं भुजङ्गमपहाय पिनाकपाणे
कण्ठे कुरु प्रकृतिशीतलमेव हारम्।

तेनैव शान्तिमुपगच्छतु कालकूट-
नित्यास्पदस्य सहसैव गलस्य तापः ॥ ७ ॥

मा जातु चन्द्रशकलाभरण श्मशाने
क्रीडा विभो सह पिशाचगणैर्विधेया ।
क्षुद्रे चिरं परिचयो विहितो विधत्ते
सौजन्यभूषणभृतामपि चित्तभेदम् ॥ ८ ॥

कस्त्वा निरोद्धुमलमीश यथेष्टचारं
विज्ञापनीयमथवास्ति ममैतदेकम् ।
गौरीपयोधरनिसर्गपरिग्रहेऽस्मि-
न्वक्षस्यमङ्गलचिताभसितं निधाय्यम् ॥ ९ ॥

शार्दूलचर्मवसनव्यसनं विहाय
क्षौमं सुरद्रुमभवं परिधेहि नाथ ।
नैतेन यद्यपि तवास्ति विशेषलाभः
शोभां तदाशु लभतां तव संश्रयेण ॥ १० ॥

प्रागेव जृम्भितमभूद्यशो जयत्सु
पुष्पायुधं[1] यदकरोन्नयनाग्निहव्यम् ।
नेत्रानलोपरि हरास्य सहायमिन्दु-
चूडापगोर्मिपयसा भव सावधानः ॥ ११ ॥

आस्येन हुंकृतिमता स्तनितैः कठोरै-
रुत्तुङ्गशृङ्गयुगलेन च भीषणेन ।
यस्त्रासमावहति[2] भीरुजनास्य शंभो
भित्त्वा जगद्भदमिमं कुरु भैक्ष्यचर्यम् ॥ १२ ॥

तेनैव वित्तपतिना जहि मैत्रबन्धं
याच्ञाञ्जलिः शिरसि नाथ मुहुः कृतो मे ।
भिक्षाटनादुपरतिं तव यो न चक्रे
शक्तेन[3] चेत्करकरोटिविपर्ययं वा ॥ १३ ॥

---

१. 'पुष्पायुधाय यद' इति पाठः स्थितः. २ 'माहवति' पाठः. ३ 'शक्तो न चेकुरु करोटिविपर्ययं वा' इति भवेत्.

मा दययें(?) पदयुगं नलिनः प्रकारं
संध्यासु नाथ पितृकाननसंक्रमेण ।
यत्क्षालयत्यहरहः परिषत्सुरीणा-
मुत्तंसपुष्पगलितैर्मकरन्दपूरैः ॥ १४ ॥
योगोचिते मदनसूदन सांध्यकाले
केशाचिते शवशतैर्निचिते श्मशाने ।
प्रेतैः प्रमोदनटनं भवता न कार्यं
धिग्देशकालगणनाविधुरं चरित्रम् ॥ १५ ॥
आत्मीयभूतिपरिभूतिकरीं समृद्धि-
माकल्ययाल्पशशिभूषणभृत्यवर्गे ।
आरोप्यते जलजनैर्जगदाधिपत्यं
यत्त्वत्समाश्रयणलब्धपदे मुकुन्दे ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये भिक्षाटनपद्धतिः सप्तदशी ।

---

अष्टादशी पद्धतिः ।

भिक्षाप्रतिग्रहमिषेण मृगेक्षणाना-
मादाय मानमपयायिनि लोकनाथे ।
रथ्यासु दुःसहनवोत्कलिकाकुलानां
तासां चरित्रमहमद्य विजृम्भयामि ॥ १ ॥
हारः क्वचित्क्वचिदलक्तरसः क्वचिच्च
धम्मिल्लपुष्पनिवहः क्वचिदुत्तरीयम् ।
क्काप्यर्धभग्नवलयानि मृगेक्षणानां
रथ्या भरेण कृतचंक्रमणा विवव्रुः ॥ २ ॥
क्षोणीतले········निपातितहारमुक्तां
स्वीकर्तुमादृतवतीव निषण्णमूर्तिः ।
रथ्यारजःसु निहितानि विभो पदानि
काचिद्ददर्श सुचिरं पुरतः सखीनाम् ॥ ३ ॥

काचित्पुरारिपदलाञ्छनभूषितायां
वीथ्याविमोक्षविमुखी पुरतः सखीनाम् ।
भूमौ विकीर्य मुषतो(?) निजहारमुक्तां
तासां क(क्र)मग्रहणसंभ्रममाचकार ॥ ४ ॥

आदाय शंभुपदमुक्तिमदादरेण(?)
रथ्यापरागमपरा निदधे कचाग्रे ।
कन्दर्पमुक्तशितबाणनवव्रणानां
निर्वापणार्थमिव सिद्धरसस्य चूर्णम् ॥ ५ ॥

मार्गे शिवस्य पतितं कृतमालपुष्प-
मादाय कापि बहु संकटमाससाद ।
यत्पुष्पमात्रधृतिभूषितमुत्तमाङ्गा-
न्नैवाङ्गमस्ति च यदन्यत(द)तो वरिष्ठम् ॥ ६ ॥

शंभोः कपर्दगलितं कृतमालपुष्पं
लब्ध्वा सखीं प्रमुदितामवलोक्य काचित् ।
वीथ्यागतप्रणयिना स्वयमप्यवाप्तुं
चूडानदीमलभतैव दृशोः क्षणेन ॥ ७ ॥

वीथ्या ययाप ललितां कृतपुष्पमालां
शंभोः कपर्दगलितामपरा वहन्ती ।
तां वीथिकां न विजहौ शशिखण्डलोभा
लब्धेऽप्युपर्युपरि काङ्क्षत एव लोकः ॥ ८ ॥

वीथ्यां शिवस्य चरणाम्बुजदत्तमुद्रां
काचिद्विलोकयितुमाननमानमय्य ।
धारात्मना निपतदश्रुजलात्तदानीं
ज्याबन्धनी मदनकार्मुकयष्टिरासीत् ॥ ९ ॥

अत्रस्थितं सुचिरमत्र बलिर्गृहीता
साकूतमत्र गिरिशेन विलोकिताहम् ।

इत्याकुला परिजनैः सह तत्र तत्र
बभ्राम नष्टमिव कापि मनोभवे तु ॥ १० ॥
स्वीकर्तुमैच्छदपरां..................
....हरस्य पदमुद्रितमादरेण ।
विन्यासलोपिचकिता मुहुरीक्षमाणा
नैवाददे न च मुमोच वधाश्चिराय ॥ ११ ॥
आदौ वृषस्य खुरधूलिरथास्य घण्टा-
नादः पुरः शिशिरमौलिधुनीसमीरः ।
वीथी स्वयं तदनु भूतपतेः प्रवासे
कस्याश्चिदाश्वसथ हेतुरभूत्क्रमेण ॥ १२ ॥
संबन्धि वस्तु दयितेन यथा कयापि
प्रत्या मनः सुखयति ध्रुवमङ्गनानाम् ।
ईशानवाहनवृषाङ्घ्रिखुराहतायाः
पृथ्व्या रजोभिरविनिःसृतिमाप काचित् ॥ १३ ॥
वीथ्यां चकार कृतमालमवेक्ष्य काचि-
न्मौलेः शिवस्य निपतेदिति जाततर्का ।
दैवात्तदास्यपचिचाय पुनः शशाङ्कं
लब्धेऽप्युपर्युपरि काङ्क्षत एव लोकः ॥ १४ ॥
यस्यां विरञ्चिबलसूदनदुर्लभाभ्यां
पद्भ्यां चचार सुचिरं स विहारभिक्षुः ।
स्वच्छन्दकेलिभवनादपि सैव रथ्या
पथ्येति कापि न कदापि गृहं विवेश ॥ १५ ॥
आत्मीयमेव धवलं वलयस्य खण्ड-
मास्ते शिवस्य पतितं वनिता विलोक्य ।
सद्यः कपर्दगलिता शशिनः कलेति
जग्राह काचिदुपसृत्य कुतूहलेन ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये रथ्याचरितपद्धतिरष्टादशी ।

एकोनविंशी पद्धतिः ।

आत्मीयनेत्रपथलम्बिनि वृत्तनाथे
रथ्यागता हरवियोगविषादशान्त्यै ।
वामेक्षणा जगदुरस्य कथाप्रसङ्गा-
दाविष्कृताद्दतरसानि मिथो वचांसि ॥ १ ॥

कस्मादयं सखि करेण सिभक्ति शंभु-
र्भिक्षाटने विधिशिरोमयमेव पात्रम् ।
कार्या कदाचिदपि नार्थितकांलहानां
दीर्घायुषामपि दशेयमितीव शास्ति ॥ २ ॥

कोऽन्यो ददाति हिमसानुमतस्तनूजां
मारद्रुहे च जगति श्वशुरद्रुहे च ।
तं लब्धुमद्रितनयामपहाय कन्यां
का वा करोति सुकुमारतनुस्तवांसि ॥ ३ ॥

कैवापरा गिरिसुतामपहाय कन्यां
कामद्रुहं जगति कामयती वृषाङ्कम् ।
तस्याः पितुर्हिमवतः श्वशुरद्रुहेऽस्मै
कोऽन्यो ददाति तनयामपहाय भीतः ॥ ४ ॥

अभ्यर्थितः सुरगणेन⋯⋯(?)विशङ्क(?)
चक्रे हरः किमिति तीव्रविषोपयोगम् ।
मन्येऽहमुक्तमगुणा गणयन्ति पथ्यं
याच्ञा विहङ्गकरणाद्विषपानमेव ॥ ५ ॥

नेत्रानलार्चिषि विभोर्मदनेन साकं
प्लोषोत्सवं किमिति नैव रतिः प्रपेदे ।
सा तत्र गन्तुमकरोदधभाग्यहान्या
तस्या बभूव नयनोदकमन्तरायः ॥ ६ ॥

कामप्रिया मदनमेव विभोर्वितन्वं
दग्धस्तदा किमिति नैव हुताशनेन ।

दाक्ष्यो न किं व्यतिकरं शिवया शिवस्य
मूढः स्वकृत्यमिति दर्शयितुं प्रवृत्तः ॥ ७ ॥
शैलात्मजासहचरोऽपि हरः किमर्थं
मन्दाकिनीं शिरसि सादरमेव धत्ते ।
इत्थं न चेत्कथमयं बहुशो भवान्याः
पादप्रहारफलदं कलहं लभेत ॥ ८ ॥
देहीति दीनपदमाहितपात्रपाणिः
केनार्थिवेर्भ्रमयमाह्वयने(द्रियते) वृषाङ्कः ।
सर्वो यथा विभवमाद्रियते जनोऽन्यः
कार्श्यं तथा प्रकृतिदुर्लभमीश्वरोऽपि ॥ ९ ॥
भिक्षैव वृत्तिरजिनं वसनं यदस्य
वाहो वृषस्तदयमिच्छति किं महेशः ।
सर्वो यथा विभवमाद्रियते जनोऽन्यः
कार्श्यं तथा प्रकृतिदुर्लभमीश्वरोऽपि ॥ १० ॥
निद्रानिमीलितविलोचनमूल्यमेष
शंभुः स्वदर्शनमदाद्गरुडध्वजाय ।
कालान्त[1] एव विभवः कुटिलस्वभावै-
र्वृत्त्यैः प्रसाधितधियो महते फलाय ॥ ११ ॥
कैलासचालनकृतांहस एव कस्मा-
दीशः कृपाणमदिशद्दशकन्धराय ।
संत्रासिताद्रितनयादृढकण्ठपाश-
लाभेन तुष्टहृदयः स न किं ददाति ॥ १२ ॥
आराध्य दुग्धजलधिः सुधयैव देवा-
न्देवाय हन्त महते गरलं दिदेश ।
एवं ध्रुवं प्रकृतिरेव कुलाशयानां
नीचेषु संमतिरसंमतिरुत्तमेषु ॥ १३ ॥

---

१. अस्फुटार्थोऽयमुत्तरार्धः.

विद्वज्जनो जगति येन पितामहेन
भिक्षाप्रतिग्रहणपात्रमकारि सर्वः ।
तस्योत्तमाङ्गमपि शंकरपाणिपद्मे
भिक्षाप्रतिग्रहणपात्रमहो बभूव ॥ १४ ॥

बाणाहवे मुरजिता विजितः पुरारि-
रित्येव विश्वगदितः सखि भूतवादः ।
सत्या स एव स यतः प्रभवो लयानां
भूत्यै पराक्रमणकृत्यमतीव हास्यम् ॥ १५ ॥

शंभो पुरा यदभवन्मदनेन साक-
मद्यापि वैरमनुवर्तत एव किं तत् ।
गौर्या सहैव कृतविग्रहसंधिना वा
पुष्पायुधो विकृतविग्रहसंधिरेव ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये चरितोपलालनपद्धतिरेकोनविंशतिः ।

---

विंशी पद्धतिः ।

गौरीवरस्य पदपातपवित्रपांशुं
रथ्याः कथंचिदपहाय शनैः प्रवृत्तैः ।
गेहे प्रवेशचरितैः पुरमानिनीनां
वाणीमिमां वयममी चरितार्थयामः ॥ १ ॥

काचित्सखीविहृतपथ्यवचोङ्कुशानां
पातैः प्रवृत्तिविपरीतशिरोविधूतिः ।
पार्श्वस्थितैः परिजनैः परिणुद्यमाना
कृच्छ्रेण दुष्टकरिणीव निकेतमाप ॥ २ ॥

अच्छिन्नया श्रुति(?)परम्परयैव वीर्यां
गौरीपतिं विहितसन्निधिमीक्षमाणा ।
सर्वास्वपीह निलयं प्रति कामिनीषु
यातासु कापि च न कापि गृहप्रवेशम् ॥ ३ ॥

प्राक्संगमे पुरजिता मदशोणरूपं
शोकेन पाण्डुरमतो नु गृहप्रवेशम् ।
कस्याश्चिदाननमभूदुदयाद्रिमेत्य
भूयः क्रमाद्विजहता शशिना समानम् ॥ ४ ॥
आश्रित्य यं भवनतोरणदीर्घदस(?)
पूर्वं पुरारिमवलोकयति स्म काचित् ।
तन्मोक्तुमेव न शशाक गृहप्रवेशे
प्राप्ते तदा कलितमूर्तिरिव स्मरास्त्रैः ॥ ५ ॥
नीतां कथंचन गृहं प्रियबन्धुवर्गो
भूयोऽपि निर्जिगमिषुं सहसा रुरोध ।
(?)स्निह्यन्ति कारणमपूर्वकपालिनीति
कस्यां कथा झटिति हन्त बहिर्गतैव ॥ ६ ॥
आपाण्डुगण्डयुगला गलदश्रुनेत्रा
स्वस्थानविच्युतकटीगुणबन्धपादा ।
आलीजनेन परितः परिरक्ष्यमाणा
बन्दीव कापि शनकैर्वसतिं विवेश ॥ ७ ॥
पूर्वं गृहात्प्रचलिता हरदर्शनाय
वामाङ्घ्रियावकरसैररुणीचकार ।
बाष्पैर्मषीमलिनितैर्विनिवर्तमाना
तामेव कापि पदवीं मलिनीचकार ॥ ८ ॥
काचित्कथंचन सखीजनसान्त्ववादै-
र्द्वारं गतापि हरमार्गविलोकनेच्छुः ।
बाणी मनस्विन इवार्थनदैन्यकाले
नान्तर्गता च वनिता न बहिर्गता च ॥ ९ ॥
या पूर्वमुन्नतपयोधरगौरवेण
क्रान्ताप्यवाप हरमीक्षितुमाशु रथ्याम् ।

तस्यैव सा हृदयदेशजुषा गरिम्णा
　　गेहप्रवेशमशकन्न पुनर्विधाना ॥ १० ॥
नाथे चिरेण पतितामनिवर्त्य बुद्धिं
　　काचित्स्वयं निववृते गुरुवश्यबुद्धिः ।
तस्याः पुनर्बहुविचारसखीं विनैव
　　बुद्धिं कृतं मदनु(?)हास्यमभूच्चरित्रम् ॥ ११ ॥
काचित्कथंचिदपि नैव गृहं विवेश
　　रथ्यां विहाय बहुभिः कृतसान्त्वनापि ।
कामातुरस्य हृ(ह)तबन्धुजनावकीर्णे
　　कारानिवाससम एव गृहे निवासः ॥ १२ ॥
गेहं प्रविश्य पुनरप्ययमागतस्य(:स)
　　वीथ्यां वृषाङ्क इति कापि विनिर्जगाम ।
रथ्यासु भैक्षचरणादपरं न कृत्यं
　　तस्योरसो मृदुमना गणयांचकार ॥ १३ ॥
काचित्प्रदक्षिणवि(नि)दर्शनदुर्बलाङ्गी
　　वीथ्यां निपात्य निजभूषणमेकमेकम् ।
यावद्गृहोपगमनं ननु तावदेव
　　रथ्यावशेषसकलाभरणा बभूव ॥ १४ ॥
वीथ्या कथंचन गृहं वचनप्रभेदैः
　　प्रावेशयद्भिरहिणीं प्रियबन्धुवर्गः ।
चित्तं तदीयमसमाक्षि(क्ष)विरक्तपार्श्वं(?)
　　नालं प्रवेशय(यि)तुमेव पुनर्बभूव ॥ १५ ॥
काचिद्विवेश शयनालयमाप्तसख्या
　　रथ्यां विहाय हरवीक्षणहानिदूना ।
तस्या मनश्च विरहव्यथया सहैव
　　श्रीकण्ठसंगममहोत्सवलम्भचिन्ताम् ॥ १६ ॥

हस्तच्युतैश्च वलयैश्चिकि(कु)रप्रमुक्तैः
पुष्पैश्च यावकरसैश्च पदाग्रमुक्तैः ।
कीर्त्यैश्च भा(हा)रमणिभिर्गिरिशस्य रथ्या-
माकल्प्य कापि शनकैर्वसतिं विवेश ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये गृहप्रवेशपद्धतिर्विंशतिः ।

---

एकविंशी पद्धतिः ।

आलोक्य मार्रजनितां कृपणामवस्थां
वामभ्रुवां निजगृहं पुनरागतानाम् ।
संदूयमानहृदयो हितबन्धुवर्गो
यान्यप्यवोचत वचांसि वदामि तानि ॥ १ ॥

हा हन्त दग्धमदनस्तव पुष्पशय्या-
शेषं शरीरमकरोदसहाय एव ।
रात्रावथास्य नवकैरवगन्धबन्धु-
मन्दानिलप्रभृतयो बहवः सहायाः ॥ २ ॥

कालानलो यदलिकाक्षि(क्ष)णिरक्षितोऽभू-
त्कण्ठे च यद्गरलमार्पितमीश्वरेण ।
तत्सर्वमात्मविरहे सति बालिकानां
तापं विधातुमिति संप्रति मे वितर्कः ॥ ३ ॥

अस्या हरेण विरहादतिकर्शिताया
हस्तच्युतं वलयमेतदलब्धदेशम् ।
आस्ते पुनः स्थितिमगादयमङ्गुलीयं
स्थानाच्युतिं मम ह एव भवत्यनर्थः ॥ ४ ॥

अज्ञातमद्य तनये त्यज शोकशङ्कं
पञ्चायुधः किमपि तत्त्वयि जातकोपः ।
रागो नवश्चरणयोरनुजातजन्मा
मुक्तावली विरचिता नयनाम्बुलेशैः ॥ ५ ॥

अङ्गेष्वयं धवलिमैव यदङ्गरागो
　दत्तः शिवेन सखि वृज्ज····(?)तैष पोषः ।
भैक्षं प्रदातुमनघाय यदोद्यमस्ते
　तूष्णीं स्थिता सुकृतभङ्गभयादपूर्वम् ॥ ६ ॥

धत्से तदद्य मम पापमभूत्तवेत्थं
　यत्संशयस्थितिरियं मदुपेक्षयैव ।
सर्वोऽपि वक्ति जन एव शिवाभिधानं
　भस्मावलीं प(प्र)ति यथेप्सितमङ्गकेषु ॥ ७ ॥

तन्मे सुता विदधती परिहासपात्रे
　प्रायेण कामुकजनस्य गुणोऽपि दोषः ।
धुर्धूरकं शिरसि नैव सुगन्धि पुष्पं
　भस्म स्तने न तव कुङ्कुमचन्दनादि ॥ ८ ॥

यत्ते(त्ते) सुता मम किमन्यदियं वृषाङ्के
　प्रेम्णा भविष्यति भुजंगमभूषणापि ।
यस्य क्षणं स्मरणमेव सुदुस्तराणां
　सर्वापदामुपशमाय वदन्ति वृद्धाः ॥ ९ ॥

तत्सत्यमेव खलु यन्नवबन्धुजीव-
　शोभाहरं सखि हरायनमामनन्ति ।
तस्मान्नि(द)तीव रतिमद्य दधासि तेन
　शोभागतैव तव शंसयितुश्च जीवः ॥ १० ॥

दृष्ट्वापि तं शिवमियं पुनरेवमार्ता
　प्रायेण पुण्यमपि पुण्यवतां फलाय ।
तत्पादपद्मयुगलस्मृतिमेव सर्वे
　सर्वव्यपायशमनीति वदन्ति वृद्धाः ॥ ११ ॥

मेघं विना स्थितिमगान्न सरित्तथैव
　बाला वृषाङ्कमिति भीतिरभूत्पुरा मे ।

(?)लोभे महालयमहो यदभूदमुष्या(पुण्य)-
प्रायैर्निजैः सह पुनर्भवनप्रवेशः ॥ १२ ॥
यस्त्वां क्षिणोति विशिखैः स्वशरण्यभूता-
मेवं सदा सुमुखि तेन समः स मारः।
शाखां स्वयं समधिरुह्य महीरुहस्य
यस्तां छिनत्ति निशितेन परश्वधेन ॥ १३ ॥
यन्न्याय्यवर्त्मगमनं निपुणं त्वयासी-
ल्लज्जा च यावदपवादभयं त्वदीयम्।
तत्सर्वमालि कथमेकपदे न(नि)विष्टं
सर्वंकषः स खलु तत्रभवाननङ्गः ॥ १४ ॥
बालामिमां हतमनोभव पुष्पबाणै-
र्मा विध्य संप्रति वदामि तथैव पथ्यम्।
(?)अस्यामरस्य विरतं सवतीन्दुमौलि-
स्सर्तो न किं भवसि तेन पराजयं ते ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये बन्धुवचनपद्धतिरेकविंशतिः।

---

द्वाविंशी पद्धतिः।

यश्चे(च्चे)ष्टितं प्रकटितं पुरसुन्दरीणां
भूयो विजेतरि पुरामनुरागबन्धम्।
प्रस्तुत्य तानि विरहोज्ज्वलमन्मथानि
संपादयामि विदुषां श्रवणातिथेयम् ॥ १ ॥
संतर्जिता गिरिशमालपसीति मात्रा
काचिन्नपानतमुखी भुवमालिलेख।
रेखा तदाकृतिरभूत्किमियं विधत्तां
चित्तानुसारि वचनं च विचेष्टितं च ॥ २ ॥
पार्श्वे [1]प्रजाव(?) गिरिशस्य निजा(?)न्धकारे
मा ते विषाद इति जीवसखीजनेन।

---

१. 'प्रयाव' इति भवेत्.

आश्वासिता झटिति कापि निमील्य चक्षुः
संपादितं तम इति प्रमदा जगाद ॥ ३ ॥

तुङ्गौ युवामिह वृथैव प्रथासुवृत्ता-
वन्योन्यसंगमजुषौ च वृथेति काचित् ।
श्रीकण्ठबाहुयुगलान्तरकाङ्क्षयेव
कण्डूभृतौ करतलेन कुचौ ममर्द ॥ ४ ॥

क्रीडाशुकं हर हरेति शनैः प्रवृत्तौ
यत्नेन पाठयितुमन्तरमन्मथापि ।
मातुर्भयेन पुनरेवमवोचदेत-
दिष्टं फलं मम करादिति वाक्यशेषम् ॥ ५ ॥

बालेन्दुशेखरमनारतकालकण्ठं
पिङ्गत्विषा तिलकितालकमीक्षणेन ।
सख्योऽपि यूयमिह पश्यत पश्यतेति
कस्याश्चिदाविरभवद्विविधो विलापः ॥ ६ ॥

बन्धुष्वनादृतवती चिरसंस्कृतेषु
भस्मावगुण्ठिततनुर्दृढबन्धमौना ।
काचित्सदैव हृदये शिवमर्चयन्ती
योगं वियोगविधुरा फलितं चकार ॥ ७ ॥

कस्याश्चन स्तनभरो भसितेन शंभो-
र्वक्षःस्थलप्रणयिना वनितं चकार ।
यः कर्तुमीप्सति समागमनं महद्भि-
स्तद्वल्लभेन कुरुते तदयं पुरैव ॥ ८ ॥

तुष्टाव निन्दति जने त्रिपुरारिमेका
पार्श्वस्थिते स्तुवति गाढतरं निनिन्द ।
मौनावलम्बिनि चुकोप चकोरदृष्टि-
स्नेहप्रिये दुरवबोधगतिर्वधूनाम् ॥ ९ ॥

काचिन्निजाङ्कमधिरोप्य शनैर्विपञ्चीं
गाथामुपाक्रमत पाठयितुं शिवस्य ।
तस्या विलोचनजलैः पुनरार्द्रव(य)द्भि-
स्तन्त्रीं स्वकीयजलता प्रकटीकृतैव ॥ १० ॥

एका त्रपोदयवशेन पुनः सखीनां
चित्ते विधातुमसमक्षमपारयन्ती ।
बाह्यं विहाय करणं पटतूलिकादि
चेतःपटे स्मरणतूलिकया लिलेख ॥ ११ ॥

शीघ्रं नयात्र सखि संप्रति नीलकण्ठ-
मित्यूचिषी सपदि मात्र(तृ)भयेन काचित् ।
तीव्रातपादुपवनादिति पूरयित्वा
लीलामयूरविषयं वचनं चकार ॥ १२ ॥

चक्षुश्चकार निजसद्मनि यत्र यत्र
विश्लेषणैर्गिरिशमैक्षत तत्र तत्र ।
एतध्रुवं(?) सपदि संगमतोऽपि मन्ये
विश्लेष एव दयितेन वनं(रं) वधूनाम् ॥ १३ ॥

शंभुर्यथा गृहमगान्मम भैक्षकाङ्क्षी
मां भिक्षयैव सह दत्तवती तदानीम् ।
प्राप्तः स एव हृदयालयमाशु तस्मै
किं देयमद्य कथयेति सखीमपृच्छत् ॥ १४ ॥

अध्यापितो रहसि केलिशुकः कयापि
नामानि मन्मथरिपोर्विरहार्तिशान्त्यै ।
तानि क्षणाद्गुरुजनस्य परो निगद्य
तस्या मनस्थविकृतिं प्रकटीचकार ॥ १५ ॥

यः कोऽपि सोऽस्तु विषमा गतिरेष रोगो
भस्मार्पणं निखिलरोगसमा चिकित्सा ।

मातुः पुरो वचनमेवमुदीरयन्त्यां
सख्यां न्यसक्त तरलां दृशमाशु काचित् ॥ १६ ॥
काचिन्निजाशयतिरस्करणाय शंभो-
र्निन्दापराण्यकथयद्वचनानि बाला ।
तानि प्रकोपमधिकं जनयांबभूवु-
स्तस्याः पुनः परिमरैरनुभाषितानि ॥ १७ ॥
गाथाः शिवस्य विलपन्नपरो मृगाक्ष्याः
क्रीडामृगो विरहतापमपाचकार ।
संसारयन्निजगलेन सितेतरेण
कण्ठं तदीयमसकृद्गृहबर्हिणोऽपि ॥ १८ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्येऽनुरागपद्धतिर्द्वाविंशतिः ।

---

त्रयोविंशी पद्धतिः ।

याभ्यो दुरापहरसंगमलोलुपाभ्यो
बन्धुर्जनस्य कटुपथ्यवचो बभाषे ।
तासां तदीयवचनश्रवणार्दितानां
ब्रूमो वचांस्यनुगुणार्थमनोहराणि ॥ १ ॥
मातः सदा गिरिशसंगमविघ्नमेव
याचे करोषि न ततः स्वधिजातरोषाः(?) ।
स्नेहं मिथो न गणयन्ति यतः पुरन्ध्याः
सापत्न्यमेव करणस्पृहया वदन्ति ॥ २ ॥
मां दुर्निवारविषमास्त्रकृतावसादां
या तर्जयत्यसकृदेव शठैर्वचोभिः ।
अप्राप्य यौवनमनङ्गविधेयमेषा-
मन्ये मदीयजननी जरती बभूव ॥ ३ ॥
अद्यापि शैशवनवं परिवर्तते मे
तन्मैव मां प्रति सवित्र(त्रि) हितोपदेशः ।

ये यौवनस्थितिजुषो जगतीह तेषा-
माचार्यकं वहति मन्मथ एव नान्यः ॥ ४ ॥
कंदर्पमुक्तविशिखप्रणि(ण, हि)ताशयस्य
यो दुर्विदग्धगुरुसंनिधिदेशवासः।
त्रुट्यत्किरातशतरागणनो(?) मृगस्य
मन्ये क्षुधार्तमृगवैरिगुहाप्रवेशः ॥ ५ ॥
पथ्योपदेशसमयः स गतः सदूरो(सुदूरे)
यस्मिन्न संन्ति मदनज्वरसंनिपाताः।
किं नैव वेत्सि जननि त्वमिमामवस्थां
यस्याः कथंचिदपि जीवितमेव रक्ष्यम् ॥ ६ ॥
शाम्येदपि स्वयमयं मदनारि(ग्नि)रीशे
नैराश्यतो जननि मा कुरु तं प्रदीप्तम्।
एधांसि नीरसनिषेधवचांसि मन्ये
कामानलस्य गुरुभिर्बहुशः कृतानि ॥ ७ ॥
स्नेहो न ते मयि परं मम देह एव
मातः किमन्यदितम(र)त्र मम प्रमाणम्।
ईशानुसारविनिवारणमाचरन्ती
यन्मे झटित्यसुरतेर्विदधात्यनुज्ञाम् ॥ ८ ॥
मातस्त्वदीयवचनैः शितशूलकल्पै-
र्नाहं मृता किमिति मर्मसु ताडितापि।
प्रायः प्रियेण विरहव्यसने वधूनां
प्राणप्रयाणमपि पुण्यफलं वदन्ति ॥ ९ ॥
छायां समाश्रयति काममहाद्रुमस्य
सर्वोऽपि संस्मृतिमरुस्थलचारुतप्ता।
नन्दत्यथापि किमयं वचसो विपाके
मन्ये जरा जनयति स्मृतिमूलनाशम् ॥ १० ॥

(?) अस्त्येव शंभुविषयान्मनसो विकारा-
द्रागो ममाद्य सखि मा परसङ्गमूलम् ।
पौष्पं रजः सपदि मालय(य) मारुतार्थ्यै
मूर्ध्नो वधायमपरं(?) पुरुषं जनस्य ॥ ११ ॥

मातः समस्तमपरं वचनं विमुञ्च
शैवी(?)समागतिकथा यदि तां शृणोमि ।
(?)त(उ)त्कण्ठयोज्ज्वलितकालहुताशतप्ता
नाराचपातसदृशान्यवचःप्रवेशः(शा) ॥ १२ ॥

धामान्नि(या मां नि)यच्छति सुदुर्लभकाङ्क्षिणी भू-
र्मा मेति किंचिदपि सा जननी न वेत्ति ।
सर्वैर्विना प्रियतमैः सुखमासितव्यं
स्वापेक्षया यदि भवेदभिलाषबन्धः ॥ १३ ॥

मामद्य शिक्षयसि शंकरवादमात्रा-
द्रोमाञ्चकण्टकितमूर्तिरसि त्वमेव ।
वृद्धः करोति विषये विषयं परस्मै
तस्मान्ममापि विनिवर्तितुमक्षमोऽपि ॥ १४ ॥

कष्टा नितान्तमशरीरिशरेण पीडा
तस्या यदस्म्य(?)तितरार्तिगतो विशेषः ।
प्रायेण शत्रुरपि शोचति मर्त्यमात्रं
मातापि नैव दयि(य)ते मदनातुरेषु ॥ १५ ॥

त्रातुं कृताभिलषितैः स्मरयन्त्रवृत्ता-
न्मौनव्रतैर्गुरुजनैर्भवितव्यमेव ।
स्वादूकरोति सुकृतामपि कामवृत्तिं
शास्त्रेण वा गुरुजनेन च वा निषेधः ॥ १६ ॥

यो वक्ति पथ्यवचनं हृदयानुकूलं
यो वा भिषज्यति भिषक्प्रियभेषजेन ।

तावेव बान्धवजनश्च चिकित्सकश्च
प्रच्छन्नशत्रुरपरो न सुहृन्न वैद्यः ॥ १७ ॥
एतन्नम(?) प्रथमम्ब मयि त्वदीये
प्रेम्णे पुनस्तदनुरूपविचेष्टितेभ्यः।
यन्मां प्रतीत्थमुपदेशविधिस्तवायं
मा भूद्विजेतरि पुरामनुरागबन्धः ॥ १८ ॥
अद्यापि शैलसुतया वपुरैक्ययोग-
मङ्गीकरोति गिरिशः स्वयमादिवृद्धः।
केषांचिदत्र तदयं जरतां जनानां
कामानवाप्य वर एव विरक्तिवादः ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये गुरुवचनोपालम्भपद्धतिस्त्रयोविंशतिः।

चतुर्विंशी पद्धतिः।

रथ्या विमुच्य कथमप्यनिवेशशेषै-
रालीजनैर्भवनमाशु निवेशितानाम्।
वामभ्रुवां शशिकलाधरविप्रयोगे
देहाश्रयाणि चरितान्युपलालयाम ॥ १ ॥
कस्याश्चिदक्षियुगलाद्धरयोर्वियोगे
जातः प्रसाधनविधेर्विपरीतभावः।
बाष्पैस्तयोः प्रथममाहितराग आसी-
दत्यश्वसन्मलिनितश्वसितोष्मणैव ॥ २ ॥
भस्मालिलेप कुचयोर्हरिचन्दनादि-
लेपं विहाय विरहे वनितां हरेण।
[1]बाष्पोदकं तदपि हन्त पुनर्निरासे
शुध्यन्त्ययोर्निरसनेन जलस्य भेदः ॥ ३ ॥
[2]त्यक्तेऽपि रत्नवलयैः सखि केलिपद्मै-
र्हस्तादपातकथने मणिकंतुकेऽपि।

१. अस्योत्तरार्धस्यास्फुटत्वम्. २. अस्य पूर्वार्धस्यार्थो नैव बुध्यतेऽस्माभिः.

कस्याश्चिदेव न जहौ करभूषणत्वं
क्रीडाशुकः पठितशंकरनामधेयः ॥ ४ ॥
श्वासानिलश्च नयनोदकनिर्गमश्च
जातागसी(सौ) विरहिणीकुचयोरभूताम् ।
आक्षेपणेन लघुनो वरणांशुकस्य
लोपेन च प्रचुरचन्दनकर्दमस्य ॥ ५ ॥
विश्लेषदुर्बलमकारणपाटलेन
संसृज्यमानमपि गण्डतलं करेण ।
आपाण्डुरच्छवि बभूव मृगेक्षणायाः
संसर्गजा इति मृषैव गुणाश्च दोषाः ॥ ६ ॥
संमानपात्रमहमस्म्यमृतांशुमौले
या सत्यमित्यधिकचिह्नितकौतुकैव ।
(?)[1]अन्या वधूरपहरात्परिकर्शनेन
साकं शशाङ्ककलया सममेव धत्ते ॥ ७ ॥
कस्याश्चिरग(रं ग्ल)पितचम्पककान्ति गात्रं
जातं हरेण विरहे घनसारगौरम् ।
(?)निःशृङ्खलप्रभृतिभिस्तदसंनिधाने
व्याप्तं मनोभवयशोगिरिवा(रा)बभासे ॥ ८ ॥
दृष्टे पुरा पुरविरोधित(नि) काचिदङ्गै-
र्या कण्ठकोगतिमयीं(?) ह रतिं प्रपेदे ।
तान्नैव जातु विरहौ(?) विरहेऽपि तस्मि-
न्नन्तर्हितेऽपि सवितर्यरविन्दनै(तै)व ॥ ९ ॥
तुल्या शशाङ्ककलयेति मृगेक्षणायाः
स्थौल्यातिरेकभणितावपरः प्रकारः ।
अङ्गानि शंकरवियोगभुवां तनिम्ना-
मध्यङ्गसाम्यमितराण्यपि शोच्यमापुः ॥ १० ॥

---

१. अस्योत्तरार्धस्यास्फुटार्थतैव.

आत्मीय एव सति धार्यदृशां प्रपन्ने
कस्तस्य धारणमृते परधारणाय ।
यत्खेदपाण्डरमथा(?)मुखपद्ममेका
हस्तोदकैर्विरहिणी न तु केलिपद्मम् ॥ ११ ॥
कस्याश्चिदश्रुसलिलेषु हिताभिषेकं
शोकानलेन सदयज्वलितेन तप्तम् ।
गौरीपतेरुपरि लब्धुमिव प्रदेशं
तीव्रं तपः[1]पृथुकुचद्वयमाचचार ॥ १२ ॥
नालंकृतौ न शयने न मिथः प्रलापे
न क्रीडनेषु न च भोजनपानयोर्वा ।
आस्थावती शिवसमर्पितचेतनैका
रागो निरत्ययसुखोऽन्यविरक्तिहेतुः ॥ १३ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये विरहिण्यवस्थापद्धतिश्चतुर्विंशतिः ।

---

पञ्चविंशी पद्धतिः ।

निष्प्राप एव गिरिशे विहितस्पृहाणां
वामभ्रुवामतिविभेदनकारणेन ।
आप्तो जनो रहसि यानि जगाद तानि
प्रत्यूषिरै(?) सह वदामि पुनस्तदीयैः ॥ १ ॥
इन्दीवराक्षि विषमाक्ष इति प्रसिद्धे
मा त्वं कृथाः पुरविरोधिनि पक्षपातम् ।
वैरूप्यमेव सखि तस्य चिराय काङ्क्षे
येनायमन्यवनिताजनवर्जनीयः ॥ २ ॥
कण्ठे हरस्य न वरं परिरम्भणं ते
हारोरगेण न कदापि यदेष शून्यः ।
त्राताः पयोधिगरलादपि येन लोका-
स्त्रातुं न मामहिविषात्किमयं समर्थः ॥ ३ ॥

---

१. अस्फुटार्थोऽयं श्लोकः.

य: कामदेहदहनाद्विरसः प्रसिद्ध-
स्तस्मै कुतः स्पृहयसि त्रिपुरान्तकाय ।
कोऽन्यः क्षमेत मदनुग्रहमन्तरेण
रक्षां विधातुमिव मन्मथपीडितानाम् ॥ ४ ॥

आश्लेषणेषु कथमिच्छसि शंकरस्य
भस्मक्रयं सुरभिणा कुचकुङ्कुमेन ।
न्यूनार्धमेव भसितादपि कुङ्कुमं त-
दर्धस्थितिः परमभिज्ञम(ङ्क)तैकमन्त्रात् ॥ ५ ॥

येनार्धगात्रमनुरागवशाद्वितीर्णं
कस्यैचिदेनमधिकामर(य)से किमर्थम् ।
चक्रे ध्रुवं स पुनरर्धशरीरदाना-
दन्याङ्गनाप्रणयसंगमनाभ्यनुज्ञाम् ॥ ६ ॥

भूलोकभृङ्गवनिता यदि दिव्यपुष्प-
माघ्रातुमिच्छति तथा हरसंगमस्ते ।
अस्माकमक्षिविषयः सहसैव योऽभू-
त्किं संभवेन्न विरहेण समागमोऽपि ॥ ७ ॥

पाणिं हरेण यदि वाञ्छति गृह्यमाणं
भीरु त्वयाप्युरगकौतुकमेव बद्धम् ।
सत्यं तदेव दृढकौतुकबन्धिने(न्धनं) मे
व्यर्थः करे शिथिलकौतुकतन्तुबन्धः ॥ ८ ॥

भर्तारमिच्छसि शिवं यदि तेन सार्धं
वस्तव्यमालि नियतं पितृकारणे(कानने)षु ।
एणीदृशां हृदयवल्लभसंनिधाने
सौधस्थलस्य विपिनस्य च को विशेषः ॥ ९ ॥

हित्वा तपांसि परुषाणि हरो दुरापः
कर्तुं क्षमे न खलु तावकमन्तमेतत् ।

मुग्धे तदीयविरहानलतीव्रतापा-
दस्मादसह्यतरमस्ति तपः किमन्यत् ॥ १० ॥
शैलात्मजैव हरमर्हति कामिनीषु
मुग्धे कथं कथय तेन समागमेच्छा ।
अर्हेतराणि गणनापरवेषवन्ति
सर्वोऽपि सर्वमपि वाञ्छितुमर्ह एव ॥ ११ ॥
उन्मादिनी त्वमिति निश्चितमालि किं तु
तन्मात्रवेषचरिते यदि ते रिरंसा ।
उन्मादिनी यदि भवेयमहं तथा त्वं
नो मन्त्रशिक्षणविधिः प्रकृतिस्थितानाम् ॥ १२ ॥
गौरीं विना सखि कदापि न शंभुरास्ते
कालोऽन्यया सह न तस्य समागमाय ।
राज्या सहैव चरि(र)तो दिवसस्य नित्यं
किं संध्यया न सममस्ति मुहूर्तयोगः ॥ १३ ॥
व्रीडां तनोति मदिराक्षि विशेषतोऽपि
वामभ्रुवामननुरागिणि रागबन्धः ।
श्लाघावहो भवति नैव किमापगाना-
मम्भोनिधेरुपरि यस्त्वयमेव पातः ॥ १४ ॥
कामं हरः सुलभ एव विहाय भूतिं
सापत्न्यमिच्छसि कथं जगतां जनन्याः ।
अस्थानधावनपरस्य मनोभवस्य
प्रायेण नैव हि जलस्थलयोर्विपातः ॥ १५ ॥
गौर्याः पुरो वहति यः शिरसैव गङ्गां
विस्रम्भभूमिरियमालि कथं परस्य ।
स्त्रीशब्दमात्रतरले तरुणेन्दुमौलौ
तस्मिन्ममापि खलु पाक्षिकलोभशङ्का ॥ १६ ॥
इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्येऽतिदीनोक्तिप्रयुक्तिपद्धतिः पञ्चविंशतिः ।

षड्विंशी पद्धतिः।

उद्यानमाशु विविशुर्हरविप्रयुक्ता
　नार्यो निजातिपरिहारमतिभ्रमेण।
पूर्वं निगूढपतनैश्च शरै.............
　स्तस्याथ दृश्यपतनैश्च सुसंस्कृतैव ॥ १ ॥

काचिन्निजोपवन एव वियोगरुग्णा
　पुष्पाणि वीक्ष्य विकृपा निभृतं दुदूये(?)।
हस्तो निजस्य निजचापलदर्शनः स
　सव्यस्मरातुरजनैर्नतु पुष्पहासः ॥ २ ॥

आलोलकिंशुकतरोस्तरुणं प्रसून-
　मापाटलं परिजहार भयेन काचित्।
निर्भिन्नकामिहृदयक्षतजावसक्तं
　नूनं स्मरास्त्रमिदमित्युपजातबुद्धिः ॥ ३ ॥

काचिद्वधूः शमय शंभुवियोगताप-
　मित्यादरेण मलयद्रुममालिलिङ्ग।
लेभे स सिद्धिमतुलां तरुणैरलभ्यां
　नैषा स्मरार्तिशमनं फलमाप किंचित् ॥ ४ ॥

कन्दर्पबाणनिकषच्युतचूर्णकल्पं
　सद्यः परागमवलोक्य दिशासु पौष्पम्।
आसूचिताखिलवियोगिजनव्यपाय-
　मुत्पातपांसु(?)मपरा गणयांचकार ॥ ५ ॥

काचिद्गता विरहिणी सहकारमूल-
　माकर्ण्य शब्दमशनिस्वननिर्विशेषम्।
सद्यः किमित्युपरि लोचनमर्पयन्ती
　पापादवैक्षत भयंकरमन्यपुष्टम् ॥ ६ ॥

कण्ठे कयापि करपल्लवमर्पयन्त्या
　भृङ्गस्वनव्यथितया गृहवाटिकायाम्।

व्याख्यातमेव च सखीजनदीर्घमान-
कर्णावतंसनवपल्लवनैव(?) रम्यम् ॥ ७ ॥
दृष्ट्वा पलाशमुकुलान्कुटिलस्वभावा-
न्काचिद्भयादपससर्प सुदूरतोऽपि।
मिथ्या प्रकाश्य कथने निजसौमनस्यं
कौटिल्यमात्मनि भवन्परिवर्जनीयः ॥ ८ ॥
आलम्बितो विरहदुःखितया कयाचि-
दाम्रद्रुमस्य सहसा तरुणप्रवालम्।
कृष्णच्छविर्यदभवन्ननु युक्तमस्य
प्रागेव पाणितलशोणिमतस्करस्य ॥ ९ ॥
यस्यैव चम्पकतरोम(र)पनीय(?) पूर्वं
मूले ददौ त(वि)मलशीतलवारिधाराम्।
तस्येतराकुसुमितस्य विनिश्चिकाय
दातुं पुनर्विरहिणी निशितास्त्रधाराम् ॥ १० ॥
भृङ्गस्वनास्य(व्य)कुसुमे कुरवे पुरस्थे
गाढं निमील्य नयने विरहिण्ययत्नात्।
कर्णद्वये तु निजसिद्धिविधानहीने
काचिन्ननन्द च निनिन्द च पद्मयोनिम् ॥ ११ ॥
काचित्पुरा प्रतिदिनं परिवृद्धिहेतो-
र्यस्यै दिदेश सलिलं नवमालिकायै।
सा पुष्पितैव जलमश्रुमिषं वियोगे
तस्यै प्रदाय कथमप्यनृणा बभूव ॥ १२ ॥
पुष्पेषु संस्तुतिमतीं क्वणितालिमाला-
मालोक्य कापि महदेव भयं प्रपेदे।
शंभोस्तृतीयनयनानि(न)लधूमनीला
सा मन्मथस्य धनुषो यत एव मौर्वी ॥ १३ ॥

योे लम्बितो विरहधर्मितया कदाचि-
दुद्यानचूतविटपो मधुसंभ्रमश्रीः ।
मानप्रवालकुसुमेक्षणमेव जात-
स्पर्शोऽपि कामुकजनैः कुरुते विपत्तिम् ॥ १४ ॥
अङ्गारसंचयमतिर्विरहातुरायाः
पुष्पेष्वजायत पलाशमहीरुहस्य ।
सा स्थापितैव मधुपैः पुनरेव लीनैः
किंचित्प्रशान्त्युचितकार्ष्ण्यधियं विधाय ॥ १५ ॥
[1]मा पुष्पितोऽयमिति नैव चकार काचि-
दुद्यानभाजि पदघातमशेषयूनि ।
न्यक्कारकृत्यमपि नाभिलषन्ति कर्तुं
प्रायः प्रसादविषयादपरत्र नार्यः ॥ १६ ॥
कामास्त्रमेतदिति जातरुषा लतासु
विश्लेषिणी सुमनसां हरणे प्रवृत्ता ।
कामास्त्ररक्षकजनैरिव सद्य एव
सैषा न्यरोषि(धि) कृतहुंकृतिभिर्द्विरेफैः ॥ १७ ॥
स्निग्धेन कोकिलरुतेन नवोद्गतेन
चूताङ्कुरेण पवनेन च मालयेन ।
कालं वसन्तमवलोक्य जनोपकण्ठे
कालं वसन्तमपरा कलयांचकार ॥ १८ ॥
आलम्बिता विरहधर्मितया कयाचि-
त्कान्तप्रवालकुसुमाभवदाम्रशाखा ।
तां वीक्ष्य तादृशदशां प्रणयिन्यथास्यां
दीर्घं स्वकीयमजुगुप्सत बन्धुभावम् ॥ १९ ॥
आमूलपुष्पितमवेक्ष्य पलाशमन्या
विश्लेषिणी ज्वलितबुद्धिरिमं शशाप ।

---

१. अस्फुटार्थोऽयं श्लोकः.

अङ्गारकारकरगोचर एव पूर्वं
पश्चात्त्वमेवमरुणच्छविराशु भूयाः ॥ २० ॥
यस्याश्चिराय विदधे गृहयूथिकायाः
पुष्पोत्तमाय बहुदैवत[त]र्पणानि ।
तां पुष्पितेन परिगृह्य चकार काचि-
द्विश्लेषिणीयुवतिजातिसमानकक्ष्याम् ॥ २१ ॥
अप्याश्मनीपरिहृतेन मुखं समीक्षे
दृष्ट्वा वसन्तसमये लकुलं सपुष्पम् ।
काचिद्व्यथां विरहिणी महतीं प्रपेदे
सत्यं नहि प्रतिनिधिर्भवितव्यतायाः ॥ २२ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्य उद्यानचरितपद्धतिः षड्विंशतिः ।

---

सप्तविंशी पद्धतिः ।

उद्यान एव ननु पुष्पितशालवर्गे
विश्लेषितप्रमनसां मदिरेक्षणानाम् ।
तं तं विनेयमनुभूय विषादवेगा-
द्वाक्यानि वक्रगलितानि विजृम्भयामः ॥ १ ॥
यन्नाम ते जगति गूढमयातवृत्त्या(?)
जातं पुरा कुरबकद्रुम वाच्यमेव ।
भूयस्तदद्य भवता कृतमन्वितार्थं
वाचालमत्तमधुपावसथं(?) प्रदाय ॥ २ ॥
उद्यानभूषण तवेदमनुक्तरूपं
छायाप्रदानहृततप्तजनश्रमस्य ।
अस्मिञ्जने विरहपावकतापवृद्ध्या
शोकातुरेऽपि दयसि त्वमशोक एव ॥ ३ ॥
वाचालकोकिलतया मधुराणि पूर्व-
मापीडयेति विधुरं तव कूजितानि ।

धान्यं धिनोति वचनैः श्रवणानुकूलै-
रन्यं दुनोति परुषैः परपुष्टजातिः ॥ ४ ॥
किं किंशुक त्वमपि संप्रति पीनलज्जः
कर्त(र्तुं) व्यवस्यसि रुजं कुसुमैरगन्धैः ।
अभ्यर्थितोऽहमिति विक्लवमानसाना-
मस्त्येव दाक्ष्र्य(क्ष्य)मसतां परि(र)पीडनेषु ॥ ५ ॥
भृङ्गाङ्गने सखि तवापि ममापि तुल्या
श्रीकण्ठ[कण्ठ]रुचिरत्र हि कोप(ऽपि) भेदः ।
पुष्पेषुचेष्टितमतीव तवानुकूलं
सत्यं तदेव हि मम प्रतिकूलमासीत् ॥ ६ ॥
आपीयसीषु(?) रसमागलमुन्मिषत्सु
पुष्पेष्वमी तत इतश्चरकायितेषु ।
मन्ये कलध्वनिमिषेण मनोभवस्य
गायन्ति मत्तमधुपा विजयप्रशस्तिम् ॥ ७ ॥
पूर्वं मया चिरतरं सहकारबुध्या
यः पोषितः प्रतिविधानसुखैः प्रयत्नैः ।
जातः स संप्रति जगत्त्रयनाशहेतु-
रा हन्त पुष्पसमये विष एव···· ॥ ८ ॥
नृत्तोद्यमोऽसि फणिसंगमनिर्भयोऽसि
बर्हिन्यदप्यसितबन्धुरकन्धु(न्ध)रोऽसि ।
तैस्तैर्गुणैरनुकरोषि पिनाकपाणिं
हन्तुं····मो(?) किमधुना कथमक्षमोऽसि ॥ ९ ॥
अम्भोनिधौ निपतितो यदि सेतुहेतोः
शैलोऽपि दक्षिणसमीरणजन्मभूमिः ।
सीतैककान्तविरहेण क(व)रं कपीन्द्रैः
संरक्षिता युवतयः सकला भवेयुः ॥ १० ॥

१. पद्यमिदं व्यतिरेकालंकारप्रकरणे विश्वेश्वरेणालंकारकौस्तुभेऽप्युदाहृतम्.

यत्ते निसर्गलघिमा यदभूल्लतानां
संसृज्य पुष्परजसा तव धूसरत्वम् ।
मैत्रं च यत्तव जलैरुचितं तदा तै-
र्मन्दानिल त्वमसि यत्प्रतिकूलवृत्तिः ॥ ११ ॥

आरग्वधादनिल कोरकमाहर त्वं
सद्वा प्रसूनमथवा दलमेतदीयम् ।
सौरभ्यमेव यदि वा करुणा तवाहो
किं नाञ्जनेयजनकस्य वियोगिनीषु ॥ १२ ॥

अत्युच्छ्रितासु सहकारमहीरुहाणां
शाखासु पुष्पनिबिडास्वधिरूढवन्तः ।
प्रायः कुहूरिति पिका निजकूजितेन
पथ्यां निशामभिवदन्ति वियोगिनीभ्यः ॥ १३ ॥

पोषं स्वकीयजननीपरिवर्जितानां
कुर्वन्ति ये बलिभुजः पिकपोतकानाम् ।
तैः सम्यगेव विदितं परिरक्ष्यपात्रं
कृष्णात्मनां सुकृतरूपमपि क्रियासु ॥ १४ ॥

पूर्वं मदीयवदनासवपुष्पितस्त्व-
मद्याहमस्मि विधिना हरविप्रयुक्ता ।
हा हन्त पीडयसि मां बकुल प्रसूनै-
र्भोक्तव्यमात्मकृतदुष्कृतमात्मनैव ॥ १५ ॥

बाणः(?) सुवर्णविजयी शुचिरेष गन्ध[ः]
संभावना शिरसि ते परमेश्वरेण ।
एतत्तथापि कृतमाल तवास्ति दोषो
यत्संगतोऽसि मलिनैरसकृद्द्विरेफैः ॥ १६ ॥

उद्यानकेलिकमलानि च तानि हित्वा
शंभोः पदाम्बुजयुगे यदि ते रिरंसा ।

गीर्वाणनाथगणकस्य जनार्दनादे-
रारुह्यतां सपदि लालत(?) मौलिमाला ॥ १७ ॥
काप्युच्चयः सुमनसां कुहचित्परागो
गन्धः क्वचित्क्वचन दक्षिणगन्धवाहः ।
दिष्ट्या वसन्तसमये मरणाभ्युपाय[:]
सार्वत्रिको विरहदुर्भरजीवितानाम् ॥ १८ ॥
पूर्वं प्रवालमथ पुष्पमथो नु गन्धं
पश्चान्मधुव्रतकुलं पुनरस्य शब्दम् ।
चूते विधाय विधिरेवमभद्रमालां
किं किं करिष्यति वियुक्तनिरूढवैरः ॥ १९ ॥
इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्य उद्यानोक्तिपद्धतिः सप्तविंशतिः ।

---

अष्टाविंशी पद्धतिः ।

उद्रिक्तशंकरवियोगविषादशान्त्यै
नानाविधे सपदि बन्धुजनैः प्रवृत्ते ।
शीतक्रियाप्रकरणे वरवर्णिता(नी)नां
यद्यद्बभूव चरितं कथयामि तत्तत् ॥ १ ॥
संचारितैश्च कदलीदलतालवृन्तै-
रुत्थापितः परिजनैः शिशिरः समीरः ।
नान्तर्ज्वरं मृगदृशां शमयांबभूवु-
र्यैले कृतेऽपि न फलाय दुदुःखवादः(?) ॥ २ ॥
मालां नवोत्पलमयीं विरहोष्मितायाः
सख्या निधाय हृदये कृतमानुकूल्यम् ।
पुष्पास्त्रमोचनपरस्य मनोभवस्य
विस्रम्भणं न वनितासु कदापि कार्यम् ॥ ३ ॥
यः कल्पितः कुचतटे विरहातुरायाः
शैत्याय सान्द्रतरचन्दनपङ्कलेपः ।

अन्तः सतामधिकृतं जनयन्नयासी-
दापाकलास्यनवकर्दमलेपकक्ष्याम् ॥ ४ ॥
कस्याश्चिदीशविरहे शयनीकृतानि
पङ्केरुहाण्यपि तया सह शोकमापुः ।
अन्यार्तिनिर्वृतिमशक्नुवतां विधातु-
र्मौनिष्वयं सुमनसामुचितैव वृत्तिः ॥ ५ ॥
धारागृहं विरहवह्निशमाय तन्व्या
भूयोऽपि मुग्धपरिवारजनश्चकार ।
तस्याः सदा कुचतटे पतिताम्बुधारे
धारागृहत्वमधिकुर्वति नेत्र एव ॥ ६ ॥
हारः पयोधरयुगे विहितः कयापि
विश्लेषितापजुषि नीलदशामवापुः ।
संतापशान्तिकरणाक्षमतापवाद-
माधातुमिन्द्रमणिमूर्धनि बन्ध एव ॥ ७ ॥
विस्रम्भिता प्रियसखीवचनेषु रम्भा-
माश्लिष्यति स्म विरहोष्मशमाय काचित् ।
कस्याश्चन स्तनयुगे निशितं मृणाल-
सांनिध्यतेन(?) सुषुवेऽम्बुजमाननस्य ॥ ८ ॥
आपीतरक्तकपिशा किमु जालजिह्वा
ज्वाला किमद्य जगतः किमुत क्षयाग्नेः ।
आलोक्य काचिदतिसंदिदिहे सखीभि-
र्नीतानि शंभुविरहे नवपल्लवानि ॥ ९ ॥
हारादिभूषणविधिः सरसैर्मृणालैः
पत्रैर्नितान्तपृथुभिर्व्यजनोपयोगः ।
पद्मैश्च कल्य(ल्प)रचना विरहातुराया-
स्तत्पद्मिनीविधिरहो विरहैकशेषः ॥ १० ॥

कस्याश्चिदान्तरघनज्वरशान्तिहेतो-
रालीजनेन विहिते शिशिरोपचारे ।
रेजे कुचोपचितचन्दनपङ्कलग्ना
मुक्तावली बिसलतेव मुखाम्बुजस्य ॥ ११ ॥

सख्यार्पितेन कुचयोर्नवचन्दनेन
भूरिज्वला विरहिणी कुपिता क्षणेन ।
तस्यास्तु देवघनसंनहनावि(दि)लेपुं
काचित्कृपामृदुमना न वृथा चकार ॥ १२ ॥

कस्याश्चिदीशविरहानलतापशान्त्यै
वाञ्छां विभोर्बहुमते भसिते वहन्त्या ।
भस्मात्मना परिणतः कथितोऽङ्गसङ्गा-
त्सख्या कृतः सरसचन्दनलेप एव ॥ १३ ॥

कह्लारसारघनसारहिमादि वस्तु
यत्पठ्यते हृदयतापहरं विदग्धे ।
तत्सर्व[मेव स]मभूत्कुचयोः परस्याः
किं चौषधं गिरिशशब्दितमेव शिष्टम् ॥ १४ ॥

जित्वा सरोजनिलयामलयागृहीतां
सौर्यं तमः कमलिनीनियतं परस्याः ।
पद्मैरकारि शयनं व्यजनं विशालैः
पत्रैर्मृणालरचितानि विभूषणानि ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये शिशिरोपचारपद्धतिरष्टाविंशतिः ।

---

एकोनत्रिंशी पद्धतिः ।

नारीजनो हरवियोगमहोपशान्त्यै
शीतक्रियां प्रियसखीषु वितन्वतीषु ।
निःशृङ्खलद्विगुणवर्धिततीव्रताप-
स्तत्कृत्यभूषणपरामिति वाचमूचे ॥ १ ॥

शीतक्रियां फलवतीं यदि कर्तुमास्था
सख्यौ मदीयमुखतः श्रृणुताभ्युपायम् ।
आनीय शंकरमिहाद्य मदीयपार्श्वे
कार्यास्ततो नु विविधाः शिशिरोपचाराः ॥ २ ॥
सत्यं त्वया प्रकटितो मयि भावबन्धः
शीतक्रियासु विरमाद्य वृथाप्रवृत्तेः ।
शक्तु(क्य)ः कथं शमयितुं सखि निर्विकल्प-
कल्पावसानदहनश्चुलुकोदकेन ॥ ३ ॥
जीहागधेन(?) हरिचन्दनसौरभेण
सान्द्रेण किं तव दिगन्तविजृम्भितेन ।
बद्धादरः पुरुषभस्मविलोच(लेप)नेऽपि
यत्तत्पराङ्मुखमना जगदेकनाथः ॥ ४ ॥
किं चन्दनेन किमु पल्लवसंस्तरेण
किं मु(मौ)क्तिकैर्बिसगुणैरथ भूषणैर्वा ।
मूढे सखि प्रियसमागम एव यद्वा
मारज्वरस्य मरणं शिशिरोपचारः ॥ ५ ॥
प्रारभ्यते प्रतिविधिः सखि यो भवत्या
मूर्छासु मे हरसमानधनं विनान्यः ।
काराग्रहाज्झटिति निर्गमतो जनस्य
द्वारोपरोध[नपरेण] शठेन तुल्यः ॥ ६ ॥
आदित्यतापसदृशं विरहोष्मतापं
बुद्ध्वेव या प्रयतते शिशिरोपचारे ।
सा त्वं पयोधिसलिलैर्वडवामुखाग्नेः
शान्तिं करोष्यपरवह्नि ससंभ्रमेण ॥ ७ ॥
साम्यं प्रतीत्य सखि सांप्रतमन्यरोगै-
स्तस्येदृशः प्रतिविधानमनोरथस्ते ।

सोऽयं पुनः स्मरगतो विपरीतवृत्ति-
र्यस्यैक एव जनकश्च निवारकश्च ॥ ८ ॥

क्रीडाशुकं सखि कलीनवचांस्यजस्रं
जल्पन्तमेनमपसारय शीघ्रमेव ।
अस्या न शिक्षणगिरं मुहुरुद्गिरन्त्या
कार्यस्त्वयापि मम संनिधितोऽपसारः ॥ ९ ॥

निर्वापणं सरसवस्तुभिरेव कर्तुं
मूढैः किमस्य सखि वाञ्छसि चन्दनाद्यैः ।
किं त्वं न वेत्सि सरसेषु मनोभवाग्नि-
र्वृद्धिं प्रयाति सुतरामिति लोकवादः ॥ १० ॥

और्वानलं जलनिधेर्नहि श[क्यते यै]-
र्हर्तुं दवाग्निमथवा न वनद्रुमाणाम् ।
तैर्मौक्तिकैः किसलयैरपि तैरिदानीं
शक्यः कथं शमयितुं सखि मन्मथाग्निः ॥ ११ ॥

ये शीतलप्रकृतयो भुवने पदार्था-
स्तेऽप्यद्य हन्त मयि तापकरा मदाद्याः ।
यः सर्वसर्गनिकरे निपुणः स वेधाः
कर्तुं क्षमो न किमयं गुरुवैपरीत्यम् ॥ १२ ॥

शय्यां करोषि मम तापनिवृत्तये चे-
दादित्यमैत्र्यजनितौष्ण्यगुणैः सरोजैः ।
सख्यावयोर्हृदयजीवितयोरभेदा-
न्मारज्वरो मयि घनस्त्वयि हन्त मोघः ॥ १३ ॥

यं पन्नगारिनिविषोष्मनितान्ततप्ताः
श्रीकण्ठपादपमिवानिशमाश्रयन्ते ।
अन्तर्ज्वरं शमय मे सखि तस्य शंभोः
कारांग्रहान्नहि वरः शिशिरोपचारः ॥ १४ ॥

नैवामुना श्रुतिकटुक्कणना शुकेन
नैव त्वयानुपम·····व्यदधानयापि ।
नीतौ युवां हितविधायि पदं यथैव
मन्ये मयैव सखि संप्रति मेऽपराद्धम् ॥ १५ ॥

हारस्त्वया सखि कृतो यदि मे मृणालै-
र्वारे न केन यदि वा विदितं मयैव ।
नाथेन वक्षसि धृतो यदतो ममाशु
संतापहार्यपि भवेत्स भुजङ्गहारः ॥ १६ ॥

मत्तेव(त्तोऽव)गच्छ सखि संप्रति शीतविद्यां[1]
विश्लेषिणीमलमलं विफलक्रियाभिः ।
लोके सुखप्रदतया प्रथितानि यानि
तैर्वस्तुभिर्वरण एव परं भिषज्या ॥ १७ ॥

प्रारम्भतोऽपि पुरतः परपीडनानां
यान्त्या पदं स्वयमकारणरूढवैराः ।
यन्मां वियोगविधुरां परितप्तुकामो
निष्पीड्यते मम(?) यतो भवतीभिरद्य ॥ १८ ॥

[2]वाक्येऽपि यार्जनकभूर्विरभङ्ग(?)दीयो
·····राक्षसीभिरनिशं न वृता सखीभिः ।
तस्या अपि प्रियसखीजनसंगमं चे-
च्चित्रं क्रियामहमिवानुभवेदसस्याम्(?) ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये सख्युपालम्भपद्धतिरेकोनत्रिंशतिः ।

---

त्रिंशती पद्धतिः ।

तापं सरोरुहदृशामचिकित्सनीयं
विज्ञाय शीतलविधाभिरपि क्षणेन ।

---

१. 'शीतविधानविद्यां' इत्यादर्शे पाठः. २. अस्यार्थो न स्फुटः.

अन्तर्दधे करुणया किल तिग्मभानु-
स्तासां पुनश्चरितमद्य वयं वदामः ॥ १ ॥

तिग्मद्युतावपरदिक्प्रणयप्रवृत्ते
दुःखं विभाव्य रजनीमुखभावतीव्रम् ।
कस्याश्चिदंशुमलिनं विरहातुरायाः
पूर्वं मुखं तदनु पूर्वदिशस्तमोभिः ॥ २ ॥

जालान्तरेण पवनः प्रविशन्कयापि
कु(रु)द्धो मृदु····ढकवाटसमर्पणेन ।
लुप्ते यथात्मनि तथा विशति स्वगेहे
मन्दानिलेन विरहिण्यवरोदवज्ञाम् ॥ ३ ॥

कस्याश्चिदस्तमयलम्बितपाटलिम्ना
पूष्णा सहैव पतत··········मायाम् ।
सख्या वियोगपरगारनियु(रु)द्यमायाः(?)
कोपात्पपात शनकैररुणः कटाक्षः ॥ ४ ॥

भीतिं यदैव विदधे कुसुमैर्हसद्भिः
··········तोयदतटान्तरितस्वरूपा ।
वामभ्रुवो विरहदर्वि········ताशयायाः
प्रादुर्भवन्नपि पुनर्नत····हिमांशुः ॥ ५ ॥

आलम्बते दिनमणिः सखि पश्चिमायां
सद्यः कयापि वि(प्यभि)हिता हरमानयेति ।
काचित्सरःसरसिजं मुकुलायमान-
मालोक्य पाणिकमलं मुकुलीचकार ॥ ६ ॥

यः पावकः प्रणयिभिर्दिवसे पृथिव्या-
मादायि चण्डमहसः किरणैरनेकैः ।
सर्वोऽपि हन्त निशि मन्मथपीडितायाः
कस्याश्चिदाशु हृदयं स विवेश तापः ॥ ७ ॥

या तुङ्गसौधशबलीभिधिता(?)वियुक्ता
या तत्समीपगतमङ्गलदीपिका च ।
सख्यः प्रमादमभिशङ्क्य तयोर्विनेतु-
र्जालप्रविष्टपवनं समतेव(?) रक्षाम् ॥ ८ ॥

काचित्सहायरचि(हि)तां निशि चक्रवाकीं
दृष्ट्वा सतीष्वपि सखीष्वनुरागिणीषु ।
तस्यै शनैरकथयन्निजकामपीडां
नूनं दशासदृशता प्रणयस्य हेतुः ॥ ९ ॥

भीमं तमस्तदपि कापि ननन्द तस्मा-
द्यस्मात्त्रिलोचनगलस्मृतिमाततान ।
काचिद्विलोक्य कमलानि निमीलितानि
विश्लेषिणी विकसितानि च कैरवाणि ॥ १० ॥

शोकः सतां परविपद्यसतां च हर्षो
धात्रे च(त्रैव) सृष्ट इति कापि विनिश्चिकाय ।
गौरीपतेरभिसृतिं सुदृशा कयापि
कर्तुं प्रसाधनमशङ्कितमाचरन्त्या ॥ ११ ॥

नाबन्धि रत्नरशना विपुले नितम्बे
वाचालता गुणवतामतिदूषणाय ।
संध्यानभश्चरमसीमनि कापि पांसुं
संसर्पिणी विरहिणी सहसा निरीक्ष्य ॥ १२ ॥

मेने जगत्रितयनिर्जयवैजयन्तीं
कामस्य रत्नपटिकां भवविह्वलैव ।
................................
................................................ ॥ १३ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये प्रदोषचरितपद्धतिस्त्रिंशतिः ।

एकत्रिंशी पद्धतिः।

प्राप्तः प्रदोष इति वीक्ष्य निरर्गलेन
पुष्पायुधेन भृशपीडितमानसानाम् ।
वामभ्रुवां विरहतापविजृम्भितानि
वाक्यानि वक्तुमभिवाञ्छति चेतना मे ॥ १ ॥

..................स्वयमेव भीतिं
विध्यन्ति मुग्धहरिणान्विजने पुलिन्दाः ।
आचार्यमुच्चरितगोपतिवंशगीतं
कामस्तु विध्यति वियोग(गि)जनं प्रपेदे(पद्य) ॥ २ ॥

तुभ्यं नमो भवतु वासरलोपसंध्ये
नान्तःश्लथामनुकरोषि जटां शिवस्य ।
आशास्महे वयममी तत एव हेतो-
र्मा भूत्कदापि शशिनः शकला....... ॥ ३ ॥

नेयं निशा हतनिशाचरयोषिदेषा
हन्तुं वियोगविधुरं जनमाजगाम ।
अस्या मुखे सपदि यः प्रथते प्रकामं
रागः स कोपजनितो न तु सांध्यरागः ॥ ४ ॥

संधुक्षयत्यविरतं हृदयं मदीय-
मन्तः प्रविश्य मदनाग्निरसौरमीरः (१) ।
अस्मिन्नमुष्य विषमास्त्रविमुक्तबाणै-
रापाद्यमानविवरे सुकरः प्रवेशः ॥ ५ ॥

....पश्चिमे क्षणमदर्शि नभःप्रदेशे
रागः क्व यात इति संप्रति मे व(वि)शङ्का ।
सत्यं हरेण विरहे हरिणेक्षणानां
चित्तेषु पुष्पधनुषा कृतसंविभागः ॥ ६ ॥

१. 'ग्निरसौ समीरः' इति भवेत्.

आसन्नचन्द्ररमणप्रणयावि(व)लिप्ता
कामव्यथां मनसि कैरविणी करोतु ।
अम्भोजिनि त्वमपि संप्रति वल्लभेन
विश्लेषिणीमयि(धि) कथं रुजमादधासि ॥ ७ ॥
दग्धुं जगत्त्रयमयं किल कोऽपि वह्नि-
रुज्जृम्भते वियति सांध्यमहश्छलेन ।
इत्थं न चेत्किमपि संप्रति वारि विप्राः
सश्रद्धमञ्जलिभिरूर्ध्वममी क्षिपन्ति ॥ ८ ॥
यस्य प्रयाणसमये प्रकटानुरागः
सोऽवश्यमेष्यति पुनः सवितेति सुप्तिम् ।
अम्भोजिनी व्रजति सुप्तिकथा कथं स्या-
न्निःसङ्ग एव गिरिशे मम भक्तिमत्याः ॥ ९ ॥
सास्वे(?)[1] स वासरपतिर्दिशि पश्चिमायां
तेजःक्षयं मयि वशेन बभूव रक्तः ।
सा हन्त पातयति सा तमियं वराङ्गी
कस्यापदे जगति नान्यतरानुरागः ॥ १० ॥
मन्येऽहमित्थमुदयारुणचन्द्रनामा
स्वीकारिणः प्रलयकालहुताशनस्य ।
धूमोऽयमग्रजनितास्तिमिरच्छलेन
विश्लेषिसार्थनयनाश्रुनिपातहेतुः ॥ ११ ॥
एकस्य रात्रिमुखवेषविषद्रुमस्य
संजातसांध्यकिरणारुणपल्लवस्य ।
आगामिपूर्णशशिबिम्बमहाफलस्य
तारागणं विगणयामि नवप्रसूनम् ॥ १२ ॥
अत्युच्छ्रितादनिल ते मलयात्प्रसूति-
र्नित्यं यतः परिचयं सुमनोभिरेव ।

१. अस्फुटार्थोऽयम्.

दाक्षिण्यवानिति जगद्विदितोऽसि तस्मा-
न्मा जातु जारसरणीं व्रज नीचसेव्याम् ॥ १३ ॥
पूर्णेन्दुपूरमरुदत्र हिमाम्बुगर्भो
गन्धोऽयमस्य मुकुलस्य विजृम्भमाणः ।
नाम प्रदोष इति दोषसमग्रभावा-
त्स्रष्टा यथार्थमकरोद्रजनीमुखस्य ॥ १४ ॥
धन्या हि सा भगवती दिवसान्तसंध्या
यामं गतां भुवि सुवीक्ष्य पिनाकपाणिः ।
विश्लिष्टबन्धनजटाभरणस्य हर्षा-
गौर्याः समक्षमपि क्ष(नृ)त्यति वीतशोकः ॥ १५ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये प्रदोषोक्तपद्धतिरेकत्रिंशतिः ।

---

द्वात्रिंशी पद्धतिः ।

कंदर्पशासनविलङ्घिजनेषु रोषा-
द्रूपादिवेन्दुमुदयस्थमवेक्ष्य ताम्रम् ।
जज्ञे हरेण विरहे वनिताजनस्य
यच्चेष्टितं तदधुना कथनीयमास्ते ॥ १ ॥
उष्णायमानमुदयारुणमिन्दुबिम्बं
काचिद्द्रवे(?)विरहिणी न शशाक भेत्तुम् ।
तस्या विवेकमतिदायितया तदानीं
तस्योपयोगमहितं शशलाञ्छनत्वम् ॥ २ ॥
अन्या विहाय मदनातुर(?)जीविताशा
जातस्पृहा मरणशब्दितमङ्गलाय ।
लब्धः शिवो भवतु मे परजन्मनीति
चन्द्रातपे विरहिणी सहसा पपात ॥ ३ ॥
आलोक्य काचिदुदयारुणमिन्दुबिम्बं
विश्लेषिणामविषहं शिशिरं परेषाम् ।

द्रोही न वा खलु ममेति जनं बिभित्सोः
कामास्त्रतः परगवीगणनां चकार ॥ ४ ॥
ज्ञातो जनैर्विरहतापजुषः परस्य
नेत्रद्वयस्य नलिनस्य च ····ति भेदः ।
पद्मेषु चन्द्रकिरणैर्मुकुलीकृतेषु
यज्जागरूकमभवन्निशि नेत्रयुग्मम् ॥ ५ ॥
चूडामणे पशुपतेरिति जृम्भितास्ता(?)
तापावहो विरहिणामिति जातभीतः ।
चन्द्रस्य काचिदुभ(द)ये विधुरा निजाक्ष्णो-
रुन्मीलनेऽपि न शशाक निमीलनेऽपि ॥ ६ ॥
भिक्षाटनं पशुपतिः कृतवानिहेति
यां हातुमह्नि गलितेऽपि हि न क्षमाभूत् ।
तां वीथिकां निशि मयूखभयाद्विहाय
छायेव कापि शनकैर्वसतिं विवेश ॥ ७ ॥
कस्याश्चिदीशविरहव्यथिताशयायाः
कामं वदन्तु मुखमेव हि चन्द्रकान्तम् ।
तस्या दृशो युगलमप्युदये हिमांशो-
र्निर्दिश्यमानबहलोदकमिन्दुकान्ति(न्त)म् ॥ ८ ॥
यावान्दिनेशपतने विरहातुराया-
स्तावान्हिमत्विषि मनागुदिते वितापः ।
पातो यथा परहिताय यथार्तिभाजां
खेदाय नूनमुदयो मलिनाशयस्य ॥ ९ ॥
प्लुष्टिर्मनाग्विरहिणीस्तनमिन्दुपातैः
काचिद्ददौ प्रियसखीमुखमारुताय ।
ारब्धमन्यदपरं पलितेक्षणेन
जज्वाल हन्त हृदये मदनाग्निरस्याः ॥ १० ॥

एका शशाङ्ककिरणोपनिपातभीत्या
　　वातायनान्तरविधा[न]कृतप्रयत्ना ।
आमीलनव्यवहृतेन्दुकरप्रयत्ना-
　　ल्लक्ष्म्या सरोजवसतिं मनसा निनिन्द ॥ ११ ॥

स्पष्टं मुहुर्भुवनजालकृतप्रवेशै-
　　रिन्दोः करैर्विरहिणी व्यथयांचकार ।
स्पष्टं जगत्प्रकृति राजति कामिनीना-
　　(?)मङ्गं मनस्थितिमनाकलयान्करेण ॥ १२ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये चन्द्रोदयपद्धतिर्द्वात्रिंशतिः ।

---

त्रयस्त्रिंशी पद्धतिः ।

चन्द्रोदये विरहविह्वलमानसानां
　　या निर्गताः फणितयो वदनाद्वधूनाम् ।
माधुर्ययोगपुनरुक्तसुधान्वितानां
　　तासामिहास्मि कथनेन विदग्धमन्यः ॥ १ ॥

किं कृत्यमद्य सखि पश्य जगत्समस्तं
　　व्याप्नोति सान्द्रमपहृत्य निशाप्रकारम् ।
त्रैलोक्यसंहरणकर्मणि कामशत्रोः
　　कोपाट्टहास इव कोऽपि शशिप्रकाशः ॥ २ ॥

एतस्य चन्द्रहतकस्य कठोरभावं
　　सख्यस्तदेव गमयेति विकल्पमेव ।
अम्भोनिधेरखिलरक्षणजागरूको
　　जग्राह यत्पशुपतिर्गरलेन साकम् ॥ ३ ॥

अन्येषु जन्तुषु सुधासहजत्वमिन्दो
　　व्यक्तीकरोषि किरणैरिति शीतपातैः ।
अस्माद्रतेषु तु पुनर्विधिवञ्चितेषु
　　तैर्दुःसहैर्गरलसोदरभावमेव ॥ ४ ॥

वेधाः सुखी भवतु सांप्रतमात्मशिष्टं
कृत्वा जगत्त्रितयमिन्दुसमाननेन ।
सद्योनिमीलितजनार्दननाभिपद्मे
गूढं स्थितस्य निहितस्य शशाङ्कभीतिः ॥ ५ ॥
किं रावणाङ्कवलितः किमु चन्द्रमौलेः
सर्वात्मनामटनभावमलंकरोति ।
निर्मूल एव किमु शीकरतः प्रलीनो
य[द्द]त्तराज्यमयमुष्णकरः करोति ॥ ६ ॥
पूर्तिं विहाय निहतद्युतिमद्य शोच्यं
कार्श्यं तदेव कुमुदैकपते भजस्व ।
यस्मिंस्त्वया निखिलचन्दनहेतुभूतं
प्राप्तं पुरार्दनकपर्दनि(शि)खामणित्वम् ॥ ७ ॥
अङ्गारगर्भकरमिन्दुमिमं विधाय
याद्दच्छिकागमन····कुरु मेऽद्य रक्षाम् ।
कालप्रतीक्षणपरो भुवनोपकारे
·······जातिरिति मा स्तुतयेऽपवादः ॥ ८ ॥
अन्तःकलङ्कमुदयाश्रितशोणभाव-
मालोचयामि सखि संप्रति चन्द्रबिम्बम् ।
अङ्गारचक्रमुपशान्तकरालमन्तः
कामस्य दु(द)ग्धवपुषस्त्रिपुरान्तकेन ॥ ९ ॥
किं क्षेममद्य सखि नः कथयाम्बुराशेः
से(सो)ऽयं कलाभिरखिलाभिरुदेति चन्द्रः ।
शैलात्मजावपुरभेदफलां स्मराज्ञा-
मेकैव वर्तयति कस्य कलाभरेऽपि ॥ १० ॥
शाणोपलं मकरकेतनसायकानां
पूर्णेन्दुबिम्बमिदमालि वितर्कयामि ।

---

१ पुरार्दनः पुरारिः शिवः.

नो चेत्तथा कथमिदं निशि तत्त्वमेषा-
मस्मिन्नुदञ्चति कथं च पुनः क्षयोऽस्य ॥ ११ ॥

इन्दुच्छलेन जलधेः प्रलयानलोऽय-
मुज्जृम्भते सखि वियोगिजनक्षयाय ।
मूर्ध्ना बिभर्ति सरितं परमेश्वरोऽपि
कालेयचन्द्रितकलापरितापगीतः ॥ १२ ॥

यद्यानियं(?) यदि स संप्रति राहुरिन्दुं
दिष्ट्या भवेद्विरहिणामपि जीवलाभः ।
भुज्या स्वयैव यदि भूरिफलं परेषां
मन्ये कदाचिदपि हन्त खलो न भुङ्क्ते ॥ १३ ॥

पात्रं करालगरगार्जि(र्मि) तदेव सत्यं
नैवेन्दुबिम्बमिदमालि यतश्चिराय ।
उत्कण्ठते मम मनः शिवकण्ठमेव
यः कालकूटगरलाम(रमप्य)खिलं ररक्ष ॥ १४ ॥

हृद्यानि मीलयसि हन्त सरोरुहाणि
हा चन्द्र जृम्भयसि संप्रति कैरवाणि ।
युक्तं तवैतदुभयं मलिनाशयस्य
हव्यावधीरण⋯⋯मभाजनं च ॥ १५ ॥

आलोकितं रमणभूषणमङ्गनानां
तापं वियोगसमयेऽहमितीति वादः ।
चूडामणिः पशुपतेमिय(?)मिन्दुराशिं
हा हन्त वर्धयति मे विधिना शठेन ॥ १६ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये चन्द्रोदयपद्धतिस्त्रयस्त्रिंशत् ।

---

चतुस्त्रिंशी पद्धतिः ।

अव्याजदुस्तरनिशीथपयोधिमध्ये
वैरायमाणविधिनैव निपातितानाम् ।

एणीदृशां हरमयाप्लवकाङ्क्षिणीनां
दौत्यत्वयानि(?) चरितानि जनः शृणोतु ॥ १ ॥

कामातुरो नहि निरूपयति स्वदैन्यं
काचित्समस्तवनिताजनपूजनीया ।
दूत्यान्मुहुः सकृदपि त्रिपुरान्तकस्य
कण्ठग्रहाय·······वरणं चकार ॥ २ ॥

यः पाण्डुरस्त्वयमथाब्धिविषं निली(पी)य
नैल्यं बिभर्ति भुवनत्रयरक्षणाय ।
दौत्यं तथाविधतथा(या)र्हसि शंकरस्य
तस्येव कापि नवमम्बुधरं ययाचे ॥ ३ ॥

कल्याणबान्धवपरो जगतीह मातु-
रन्यो जनोऽयमिति जीवसखीषु रूक्षा ।
काचित्स्वमातरमयाचत शंभुदौत्यं
किं नैव कारयति कामभवो विकारः ॥ ४ ॥

सामोक्तिभिः प्रियसखीमनुचर्य काचि-
द्दौत्याय वाच्यमनया परिपृच्छ्यमाना ।
तूष्णीमजातनिजसंगमने वृषाङ्के
वक्तव्यहानिपरिदूयमना बभूव ॥ ५ ॥

यामेव जीवितसखीं परिरभ्य गाढ-
मीशोपकण्ठगमने त्वरयांचकार ।
तां प्रस्थितां सपदि वीक्ष्य रुरोध काचि-
दीशान्तिकान्यवनितागमनासहिष्णुः ॥ ६ ॥

संदेशगर्भितपुटे सरलेखपात्रे
विन्यस्तसान्द्रनवचन्दनपङ्कमृत्के ।
शंभोर्भविष्यति करप्रणयीति काचि-
न्मुद्रां व्यथाविरहिणी कुचचूचुकेन ॥ ७ ॥

मा गास्त्वमद्य हरसंनिधिमसदर्थे
प्राणासिका यदस्ति मे तदिहासितव्यम् ।
प्राणाः प्रयान्तु सुखमद्य ममेति काचि-
त्स्नेहोक्तिभिः प्रियसखीं त्वरयांचकार ॥ ८ ॥

न प्रेषिता प्रियसखी गिरिशस्य पार्श्वं
सा स्त्रीति शङ्कितधिया सुदृशा कयापि ।
मत्वा नपुंसकमिति प्रहितं मनोऽभू-
त्तच्चापि तत्र रमते किमयं विधत्ताम् ॥ ९ ॥

कृत्वाधरं रचितचिह्नमलक्तकेन
तस्याः कुचाग्रमपि कुङ्कुमकर्दमेन ।
काचिद्गभीरहृदया हरसंनिधानं
गन्तुं पुनः प्रियसखीं वनिता न्ययुङ्क्त ॥ १० ॥

योऽपीदृशं वितनुते परकीयमिष्टं
तादृक्फलं स फल(लभ)ते पुनरित्यभिज्ञाम् ।
मामद्य योजय हरेण विधाय दौत्य-
मित्याजगाद विधुरा निशि चक्रवाकीम् ॥ ११ ॥

रागः शठो नियतमन्यतरानुरागः
स्वस्थः स एव पुरुषस्य निरङ्कुशस्य ।
मानग्रहो हि मरणाय वधूजनस्य
आचक्ष्व नाथमिति कापि जगाद दूतीम् ॥ १२ ॥

वार्ताहरीमनधिगम्य हरेः शुचान्या
तापोऽर्जिते स्तनतटेऽश्रुजलं मुमोच ।
तस्मै हृदि स्थितवते स्थित एतदीयां
वक्तुं प्रविष्टमितरन्नहि तत्र दृष्टिम् ॥ १३ ॥

संदेशमीशविषयं स्वयमेव काचि-
द्यस्मिन्विलेखितुमुपाक्रमताञ्चिताक्षी ।

तत्रैतदाशु धूतकज्जलबाष्पपातैः
प्रागक्षरार्पणविधेर्मलिनीचकार ॥ १४ ॥
किं किं परिभ्रमसि..............कुदले मे
पुष्पोज्झितेऽपि मधुपार्थितया तथैव ।
आनीय शंभुमिह स द्रुतमाप्तकामो
भूयादिति भ्रमरमाह शुचेव काचित् ॥ १५ ॥
दीर्घं मयैव कलजल्पितशिक्षणं ते
तद्वीक्षतामविरतस्य स एष कालः ।
कालान्तकाय कथया मम कामपीडा-
मित्यन्तरङ्गमपरा शुकमाबभाषे ॥ १६ ॥
कण्ठावतंसकुसुमाश्रयणापदेशा-
त्कस्यैव कण्ठविवरं प्रतिपाद्य सद्यः ।
वार्ताहरो भव हराय ममैव काचि-
दात्मालकान्तिकचरं भ्रमरं बभाषे ॥ १७ ॥
स श्लेषदुःखशमनाय सरोरुहिण्याः
संध्या प्रयान्तमनुगम्य कठोरभासम् ।
आयास(सि)तेन न विनेति कथाप्रसङ्गा-
त्सख्युः पुरो विरहिणी वचनं जगाद ॥ १८ ॥
आहूय दौत्यगमनाभिमुखीं वयस्यां
संदेशमीशविषये बहु वक्तुकामा ।
तत्पार्श्वमेष्यसि यदीत्यसमाप्तितोक्ति-
र्बाष्पैरवोचदपरा कथनीयशेषम् । १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये दूतीप्रेषणपद्धतिश्चतुस्त्रिंशत् ।

---

पञ्चत्रिंशी पद्धतिः ।

अस्मादृशामसुलभस्य विभोरशक्ये
दौत्ये पदे युवतिभिर्विनियोजितानाम् ।

तं व्यापिनं गगन एव विधाय लक्ष्यं
दौत्योचितानि वचनान्यभवन्सखीनाम् ॥ १ ॥

कालान्तकोऽयमिति विश्वजनप्रसिद्धं
सत्यां विधातुमिति चेद्गिरिजाभिलाषः ।
यो बाधते त्वयि दृढप्रणयां सखीं मे
कालं तमद्य झटिति क्षपय क्षपाख्यम् ॥ २ ॥

सख्यां वसन्तसखबाणगणार्दितायां
तां किंचिदत्र करुणां तरुणेन्दुमौले ।
मा वा (?) न नः क्षितिरतो मरणं वरिष्ठं
जीवस्थितेस्त्वमनुरागनिमित्तमस्याः ॥ ३ ॥

किं विस्तरेण शृणु शंकर संग्रहोक्ति
वक्तव्यवस्तुनि मया सति पृच्छ्यमाने ।
नैवाक्षरैः सपदि कण्ठगतैर्मृगाक्ष्याः
प्राणैरभाणि हरितव्यमशेषमेव ॥ ४ ॥

गौरीसखस्य तव मा भवतु प्रसक्ति(त्ति)ः
कल्याणकाममितरासु मृगेक्षणासु ।
कण्ठे चिरं रुचिमती गरनीलमूले
भूयात्सदैव करुणाधिकवल्लभाय ॥ ५ ॥

शंभो तदा त्वदवलोकनपुण्यकाले
यान्त्यामभून्निपतितः प्रथमाश्रुपूरः ।
शोकाश्रुणः परिभवेऽपि किमायताक्ष्या-
स्तस्यास्तयोर्नयनयोरनुरूपमेव ॥ ६ ॥

सर्वज्ञता निरुपयिच्छ(?)क्तृपापि सिद्धे-
रव्याहतत्वमिति नाथ गुणास्त्रयस्ते ।
तत्र त्रये नियतमन्यतरस्य लोप-
स्तस्या न चेदिह विधास्यति जीवरक्षाम् ॥ ७ ॥

पाण्डुत्वमावहति भस्मकृतिं विनाङ्गे
　धूमं विना च नयनाश्रुनिपातहेतुः ।
शंभो विना ज्वलति चेन्धनमद्भुतं त-
　त्तस्यास्त्वदीयविरहप्रचितो हुताशः ॥ ८ ॥
याचे भवन्तमिदमद्य जटाकलापे
　पूर्णं निधेहि शशिनं विकलं विहाय ।
दैन्यं च ते विकलचन्द्रपरिग्रहोत्थं
　तस्याश्च मा भवतु दुर्विषहोऽद्य तापः ॥ ९ ॥
यत्तादृशं मयि तथा प्रणिपातदैन्यं
　सख्या गिरीशसहितेऽत्र निंनादमेतत् ।
सद्यस्त्वया च नरनैपुणरूढयैव
　यन्निद्रया निशि विभो प्रणयव्यवायः ॥ १० ॥
त्वां याचते मम सखी निशि मन्निकेत-
　मागम्यतामिति पुरार्दन मन्मुखेन ।
नातः परं मृगदृशामभिमानभङ्गो
　लभ्येत चेदभिमतं ननु सोऽपि मह्यम् ॥ ११ ॥
मद्य(ध्य)स्थितिं तव मनोभवपीडितायां
　याचे न पक्षपतनं चिरजीवसख्याम् ।
एतावतैव हि भविष्यति काम्यसिद्धि-
　र्माध्यस्थ्यमातुरजनेष्वपि पक्षपातः ॥ १२ ॥
आश्लेषणं तव सुदुर्लभमस्तु शंभो
　सख्याः प्रयच्छ ललितं तव बाहुमूलम् ।
तस्या गले विनिहिता(?)मसवः प्रयाणे
　प्रारम्भिणी(?) पुनरिमं न विलङ्घयेयुः ॥ १३ ॥
गौरीकुचार्पणमहावलयाहिधन्ये
　कण्ठेन तेऽन्यवनिताजनसङ्गमोहः ।

तत्र स्व(त्व)यार्पितमवेक्ष(नवेन) भुजंगमेन
तस्या भुजोऽपि घटतामिति नाथ याचे ॥ १४ ॥
कुर्वन्तु तापमवरे विरहाः परेषां
याच्ञाविभञ्जनमिदं तव नैव युक्तम् ।
शंभो यतस्त्वमपि वेत्सि विरोहभिक्षुं
नित्यं सुदुर्विषमयाचनभङ्गपीडाम् ॥ १५ ॥
त्वत्संश्रुतापि भवतैवमुपेक्षिता चे-
त्सा नः सशेः(?) वरद हन्त तवैव हानिः ।
यन्नीलिमा तव गले सहसैव जस्यात्(?)
कारुण्यहेमनिकषोपलशैललक्ष्मीः ॥ १६ ॥
सा पद्मचारुनयना विषमेक्षणस्त्वं
सा कुञ्चितालकभरा हर धूर्जटिस्त्वम् ।
सा सद्गुणैकवसतिर्गुणवर्जितस्त्वं
तस्यास्तथापि किमिदं तव दुर्लभोऽसि ॥ १७ ॥
या वीक्ष्य नाथ गरलं तव कण्ठमूले
या पन्नगेन्दु(न्द्र)मपि तत्र पुरा निनिन्द ।
जातस्पृहैव भगवन्भवतीयमात्रे(र्त्रा)
पापादियं न सहते विरहं त(त्व)दीयम् ॥ १८ ॥
कामं वृथा भवतु मे त्वयि कामदौत्यं
प्रष्टव्यमेतदभिधेहि पिनाकपाणे ।
तस्यास्तथा स्मरशरैर्विहितप्रहारे
चित्ते वसन्नपि कथं त्वमकामविद्धः ॥ १९ ॥
गङ्गापयः सकलमेव कपर्दकोणे
सद्यो विलीनमिति नाथ कियान्मदस्ते ।
सामर्थ्यमस्ति यदि ते नयनाम्बुपूरः
सख्यास्त्वदीयविरहप्रचितो निवार्यः ॥ २० ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये दूतीवचनपद्धतिः पञ्चत्रिंशत् ।

षट्त्रिंशी पद्धतिः ।

विश्लेषितैर्युवतयो विरहे त्रियामं
निन्युः सुदुःसहवियोगनितान्तदीर्घाम् ।
तेषां विचक्षणवचस्युपवर्णनेन
वाणीमिमां वयममी चरितार्थयामः ॥ १ ॥
कस्याश्चिदिन्दुमलयानिलचक्रवाक-
केङ्कारसंतमसकैरवसौरभाद्यैः ।
विश्लेषवंशमथनैर्निचिते निशीथे
मूर्छाप्रसादकृत एव हि जीवलाभः ॥ २ ॥
प्रत्यग्रपुष्परचिते शयने न शिश्ये
नाश्लिष्ट(?)कुत्र च न चैव सखीं बभाषे ।
नापि क्वचित्स्थितिमती न ययौ न विघ्नः
किं किं विधाय विधुरा रजनीमनैषीत् ॥ ३ ॥
चन्द्रक्षयं भव मुहुर्भुजगामिषस्य(?)
भूयाः कलङ्कनिलयो जलतां भजस्व ।
कस्याश्चिदित्यपुनरुक्तमुदीरिताभिः
शापोक्तिभिः सह निशाविरतिं प्रपेदे ॥ ४ ॥
तच्चिन्तनैस्तदनुबन्धिकथाप्रसङ्गै-
स्तत्संगमानुगुणकर्मनिरूपणाभिः ।
तन्नामभाषिशुकसंहननैश्च काचि-
द्रात्रिं निनाय रहिता परमेश्वरेण ॥ ५ ॥
पर्याप्तशीकर····मण्डलतालवृन्ता
नीरन्ध्रसंस्तवदृढप्रणया सखीव ।
कस्याश्चिदीशविरहव्यसने प्रवृत्ते
पार्श्वं न जातु विजहौ विपुला त्रियामा ॥ ६ ॥
संतप्तमूर्तिरतिशीतलराजरम्भा
शंभोस्ततार रजनीचरितं वियुक्ता ।

किंतु च्युते दयितपोतदृढोपगूढे
यस्मान्न भावि पुनरुत्तरणं वधूनाम् ॥ ७ ॥

व्याजोक्तिभिश्च गमनाय गतिप्रसक्ता-
माहूय शंकरवशीकृतिशालिभिश्च ।
दूतीं प्रकृत्य पुनरेव पुनः कृताभि-
र्याता निशा मृगदृशो न तु सा प्रयाता ॥ ८ ॥

पौष्पैः शरैः प्रहरतो रतिनायकस्य
पुष्पास्त्रविद्धवपुषश्च मृगेक्षणायाः ।
प्रायेण नैव निशि सुप्तिरभूत्तथापि
मूर्छासु सा विरहितापि निमीलिताक्षी ॥ ९ ॥

किं कालरात्रिरथवा किमु कालदूती
किं पापसंहतिरनेकविधप्रवृत्ता ।
किं मर्मकृन्तनकरी शितहेतिरेषे-
त्येका व्यलङ्घयदपोक्तिभिरेव रात्रिम् ॥ १० ॥

चन्द्राभिधानवडवाग्निमदृष्टपारं
कंदर्पकेतुमकरभ्रमणातिभीमम् ।
अच्छिन्नबन्धहरचिन्तनसेतुनैव
काचिद्गभीररजनीजलधिं ततार ॥ ११ ॥

शैत्यार्थिनी कुसुमतल्पमवाप पूर्वं
पश्चात्प्रवालशयनं तदपि प्रमुच्य ।
श्रीकण्ठकण्ठसरसीमतिशक्यहेतोः
काचिद्गतामभिनवैश्च निशां निनाय ॥ १२ ॥

वापीमवाप नवचन्दनपङ्कलिप्ता
प्रत्यग्रपुष्पशयनात्पुनरेतदस्याः ।
इत्थं द्वयोरपि तयोररतिं वहन्ती
काचिद्गतागतगतेन निशां निनाय ॥ १३ ॥

यस्याः क्षणादपगतिं हरविप्रयुक्ता
यस्याश्च काचन समागममाशशंस ।
न प्रस्थिता च रजनी न समागता वा
निद्राविधातरि विरोधिनि नेष्टसिद्धिः ॥ १४ ॥

एकक्षणप्रतिस····दिवसार्जवेन
योगान्निशा च विरहादपनामदीर्घः ।
ताभ्यां विवर्जितरहो दिवसक्षपाभ्यां
देहं विचिन्त्य विरहिण्यपरा चचार ॥ १५ ॥

आलम्बिते प्रियसखीभिरथात्मनापि
पर्यायतः क्षणमशान्तिवशेन मुक्तैः ।
बाला शिलामिव विशालतमां कथंचि-
त्काचिद्गुणैः पुरजितो रजनीं चकार ॥ १६ ॥

शक्येतराय गिरिशाय रुचैर्वचोभि-
र्दौत्याय जीवितसखीमपरा न्ययुङ्क्त ।
प्राणव्यये विरहिणी रजनीमशेषां
तस्याश्चिरायितवशेन चिरायते स्म ॥ १७ ॥

गौरीपतेरथ च चौर्यमवेक्ष्य काचि-
द्रात्रिं निनाय निखिलामपि जागरेण ।
लब्धेऽपि रक्तकुमुदिन्यवितन्द्रगङ्गा
जागर्ति तस्करजनो निशि पुष्कलोऽपि ॥ १८ ॥

काचित्क्षपां क्षपयितुं विपुलां सखीभिः
संप्रस्तुतस्य वृषवाहनकीर्तनस्य ।
आकर्णनेन चरमेतरयोः प्रवृत्तां
संध्यां द्वयोरपि तयोर्युगपद्ददर्श ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये रजनीयापनोक्तिपद्धतिः षट्त्रिंशत् ।

सप्तत्रिंशी पद्धतिः ।

दीर्घां निशां शमयितुं विरहे हरेण
　　निद्राप्रसक्तिरहितस्य वधूजनस्य ।
नानाविधानि चरितानि सखीं प्रकृत्य
　　जातानि यानि कथयाम्यहमद्य तानि ॥ १ ॥

आहूत एव न समीपमुपैति भिक्षां
　　गृह्णाति नैव मुहु····स्त्रयते तथापि ।
यत्ते चिरादनुसृतोऽपि न-च्चाभिमुख्यं
　　भिक्षुं मृगाक्षि वद कोऽयमदृष्टपूर्वम् ॥ २ ॥

भिक्षाप्रदानसमये न मया तदानी-
　　मालिङ्गितोऽभवदहं पुनरद्य दूये ।
चिन्तामणिं करतलस्थमुपेक्षयोर्व्यां
　　सद्यो निपात्य मृगये तमितस्ततोऽपि ॥ ३ ॥

भिक्षातिसर्जनमिषादहमिन्दुमौले
　　वक्षःस्थलेन मम योजयितुं प्रवृत्ता ।
अत्रान्तरे श्वसितमूर्जितमुत्ससर्ज
　　हारो हरस्य सखि भाग्यविपर्ययेण ॥ ४ ॥

भिक्षां ददात्यभवती(?)मुदिते शिवेन
　　तां दातुमोदनमयीं मयि सोऽद्य मायाम् ।
यत्तस्य गर्भित········ररहःप्रवृत्त-
　　मन्दस्मितं सखि न ते हृदयादपैति ॥ ५ ॥

गात्रं विकर्षितमभूद्गिरिशानवाप्त्या
　　वार्धासमीक्षणमदर्शनतः शिवस्य ।
लब्ध्वा शिवं सततमाहितसंनिधानं
　　संतप्यते सखि कथं हृदयं मदीयम् ॥ ६ ॥

यद्यागमिष्यति मदीयगृहोपकण्ठं
　　भिक्षाटनाय गिरिशः समनन्तरेऽपि ।

तस्योपगूहनविधिर्भवितव्य एव
दातुं प्रदानसमये स्ववशो हि भिक्षुः ॥ ७ ॥
नाट्ये कृतश्रममिवास्य पदं गतेन
देहीति दीनपदमप्यनुषक्तरागम्।
पत्रावलम्ब्यहिकरः करणप्रवीणः
प्रायेण कोऽपि नट एष न भिक्षुरेषः ॥ ८ ॥
इक्षुर्धनुर्मधुकरावलिरेव मौर्वी
शस्त्राणि पञ्च नवपुष्पमयानि कस्य।
लोकत्रयं विजयते मदनस्तथापि
········मयाय निजधैर्यमतन्त्रमेतत् ॥ ९ ॥
पुष्पायुधो गि[रि]शनेत्रहुताशनेन
प्राग्भस्मसात्कृत इति स्म कथा वृथैव।
आलिङ्गिताननममुष्य तयोपदिष्टो
मन्ये वियोगिजनदाहविधिप्रकाशः ॥ १० ॥
बद्धा जटा नयनमप्यसमं चितैस्त-
न्नीतं वपुश्च भसितैरतिधूसरत्वम्।
एवं य··········नोह····भैक्षचारे
कान्तीविगूहितमहो विबभूव शंभुः ॥ ११ ॥
तां पार्वतीं मनसि मे परमेश्वरेण
यो येन योजयितुमक्षमतां प्रपेदे।
तेनैव मां शमयितुं यतते मुधैव
कामोऽपि कामुकवदेव विवेकहीनः ॥ १२ ॥
वीथ्यां तथा पुरत एव जनस्य शंभुं
कण्ठे ग्रहीतुमभयं विहितोद्यमेव।
लज्जा रुरोध सखि मां सहसा किमन्य-
स्त्रीवात्र साप्यभवदेव हि मे सपत्नी ॥ १३ ॥

स्त्रीजातिमात्रहृदयार्तिकके वृषाङ्के
कंदर्पदौत्यमनुतिष्ठति केवलस्याः(?)।
क्रीडाशुकः शरणमन्यतमो ममायं
लोके पुनः फलितमात्रवचान(?) दूतः ॥ १४ ॥

साक्षात्पुरस्थितमपोह्य वृषाङ्कमद्य
चित्रे निवेश्य परिरम्भणमाचरन्ती।
भित्त्वा विहारसरसीं परिवृद्धपूरां
वाञ्छामि गाहितुमहं मृगतृष्णिकायाम् ॥ १९ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये रजनीयापनोक्तिपद्धतिः सप्तत्रिंशत्।

---

अष्टत्रिंशी पद्धतिः।

नीरन्ध्रमुक्तशरपीडितमानसाना-
मेणीदृशामकरुणेन मनोभवेन।
विश्लेषसुप्तिविषयाणि निशाविरामे
जातानि यानि चरितानि वदामि तानि ॥ १ ॥

निद्रावतीं गिरिजया कृतदेहसंधि-
रप्याजगाम विधुरां स्वयमिन्दुमौलिः।
अप्यन्ययोषिदुपधानपदे निरुद्ध-
प्रीत्या ध्रुवं प्रभुजनो भव(ज)तेऽन्यनारीम् ॥ २ ॥

वामे विधौ भवति बन्धुजनोऽपि वैरी
सुप्तां कथंचिदपि जीवसखीं निशान्ते।
मूर्छाभयाद्विरहिणीं प्रतिबोधयन्ती
विच्छन्ति(?)माशु विदधे हरसंगमस्य ॥ ३ ॥

लाभं परार्थमपरत्र नयेद्विधाता
सुप्त्यागते विधुरया गिरिशे कयाचित्।
गाढोपगूहनविधेरसकृत्कृतस्य
पार्श्वोपधातमभवत्सहसैव पात्रम् ॥ ४ ॥

रोमाञ्चितैरवयवैः स्फुरिताधरेण
किंचिद्विलग्ननवता च कुचद्वयेन।
ज्ञात्वा सखी हरसमागमनं चरन्ती
निद्रां स्वकीयहरनिर्वहणां ननन्द ॥ ५ ॥

काचित्कथंचन निशाविरतिप्रसुप्त्या
संमीलिताक्षियुगलापि शिवं ददर्श।
या पुण्डरीकवदना च मृगायताक्षी
तस्या विरुद्धचरितास्पदतापि युक्ता ॥ ६ ॥

साक्षात्कृते पशुपतौ न कदापि शोच्या
जायेत मीलनदशा नियतं नराणाम्।
यद्दृष्टवद्गिरिशमह्नि तदायताक्ष्या
यत्नं विनैव निशि मीलितमक्षियुग्मम् ॥ ७ ॥

जातप्रबोधजनलभ्यनिजानुभूतिं
सुप्त्यै(प्त्वै)व काप्यनुबभूव शिवं वियुक्ता।
स्नेहः शिवे यदि भवेदमितो नराणां
मार्गेण विध्यति न कर्षवतापि शंभुः ॥ ८ ॥

यत्सुप्तिभङ्गकरणं स्मृतिभिर्निषिद्धं
तेनैव सर्वविषयं विरहार्तलक्ष्यम्।
सख्या प्रभातमिति कापि निबोधयन्त्या
हा हन्त भञ्जितशिवानुभवा बभूव ॥ ९ ॥

उद्दिश्य कापि विधुरा गिरिशानुभूतिं
सुप्त्यैव लोचननिमीलनमाचकाङ्क्षे।
तस्यास्तदेतदुचितं खलु येन सर्वे
पश्यन्ति तं शममना(नो)विनिमीलिताक्षः(क्षा) ॥

आलिङ्गनं किमथवाधरपानमस्य
मन्दस्मितं किमुत वा स्थितिरेव तूष्णीम्।

अन्यक्रिया किमपि कापि सखीमपृच्छे-
त्स्वप्नागतेन गिरिशेन रतिं चिकीर्षुः ॥ ११ ॥
सर्वोऽपि चौर्यमपरा(?) वनितासु कुर्व-
न्कामी समीप्सति परस्य जनस्य सुप्तिम् ।
आश्चर्यमेतदचलेन्द्रसुताभयेन
यत्सुप्तयैव विदधे रसचौर्यमेव ॥ १२ ॥
योगप्रबुद्धहरिनाभिसरोजसृष्टौ
संभाव्यते न खलु ···· गिरिजापरेण ।
सृष्ट्यन्तरे कुरु तदागमनप्रधानं
सुप्त्येति कापि नयनाम्बुरुहं ययाचे ॥ १३ ॥
वामभ्रुवां हरसमानयनाय निद्रा
नाभ्यर्थिता तदपि सैव न माननीयः ।
अभ्यर्थितापि विदधे न सखीति दृष्टं
किं कस्य केन फलमित्युपतर्क्यमेव ॥ १४ ॥
पार्श्वे तवेन्दुमुखि शंकरमानयेति
विश्वस्य मां नयनमीलनमाचरेति ।
स्वप्ने समागममनेन विबुध्य तन्व्या
निद्रावतीं प्रियसखी विदधे वियुक्ताम् ॥ १५ ॥
जाग्रत्प्रपञ्चविपरीतविधानदक्षे
देव्यद्य मे नयनयोः क्षणमात्रमास्स्व ।
काम्यार्थसिद्धिरियतैव ममेति निद्रा-
मन्तर्निगद्य विधुरा न च तल्पमाप ॥ १६ ॥
इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये स्वप्नपद्धतिरष्टत्रिंशत् ।

---

एकोनचत्वारिंशी पद्धतिः ।

संगत्य रात्रिविरतौ कथमप्यवाप्त-
निद्राप्रसादसुलभेन महेश्वरेण ।

स्वप्नोपभोगमवदन्प्रमदाः प्रमोद-
तस्तद्यो हरस्य हि मताय सखीजनाय ॥ १ ॥
स्वप्नो हरेण रतिमद्य विधातुमीष-
त्सक्तस्त्वयास्तकृपया प्रतिबोधिताहम् ।
सुप्तिं व्रजेयमधुनास्य समागमाय
भूयोऽपि नैव सखि मे प्रतिबोधिनी भूः ॥ २ ॥
आलिङ्गिताङ्गमभयं शशिभूषणेन
स्वप्ने मया तु न स यन्न गले गृहीतः ।
व्रीडावशस्तिमितया सखि हन्त पापा-
न्नोऽज्ञासिषं किमिति सुप्तिविजृम्भितं तत् ॥ ३ ॥
स्वप्ने हरेण विहितेऽपि तथैव भागे
नासीत्क्षतं वपुषि मे सखि हा हतास्मि ।
यन्नैव कृष्टमधरं न रतिक्षतस्य
क्षत्रं तदेवमुभयं फलहीनमेतत् ॥ ४ ॥
यः प्रस्थितो गतघृणः सखि चन्द्रमौलिः
स्वप्नागतः प्रथममेव मयोपगूढः ।
वीथीगतो यदि भवेत्त्रपयाभिभूता
तस्याग्रतो नहि यथैव पुरा भवेयम् ॥ ५ ॥
सुस्वप्नदर्शनफलं भवति प्रबोधे
पश्चादिति स्म कथयन्ति तदन्यथापि ।
स्वप्ने शिवस्य निशि वीक्षणमालि जातं
तस्योपगूहनविधिं तदसूत सद्यः ॥ ६ ॥
स्वप्ने हरेण परिभोगरसेप्सुना मे
वासो गृहीतमिदमेव तदा विबुद्धम् ।
सख्यावयोरुपरि यानि विचेष्टितानि
ज्ञाता परं विषमसायक एव तेषाम् ॥ ७ ॥

यन्मे हरेण सह संगमसौख्यहेतौ
नेत्रोन्निमीलनदशां स्वयमाससाद ।
सोढा स्वयं विपदमर्त्यपहारकृत्यं
नेत्रोपमस्य चरिते किमुत स्वदृष्टेः ॥ ८ ॥

स्वप्नोपलम्भनदशा मम सैव नित्यं
भूयात्प्रजागरदशा सखि माददापि (?) ।
यस्यामवापदचलेन्द्रसुतैकशेषं (?)
वक्तुः प्रजागरसुदुर्लभमीश्वरस्य ॥ ९ ॥

स्वप्ने शिवः सुदति संप्रति देहि भिक्षा-
मित्यूचिवानहमदामविलम्ब्य तस्मै ।
नैवाददे न गत[वान्] स्मितमेव चक्रे
दत्ता मयास्य तु गले दृढमङ्कपाली ॥ १० ॥

यो वीक्षितोऽह[नि] निशि······सुप्रलब्ध-
शर्याप्त(?)····मधिरिरंसुरिवाससाद ।
दृष्ट्वा तमाशु गलता वसनांशुकेन
जारायितं चिरनितम्बनिषेविणा···· ॥ ११ ॥

आलम्ब्यमानवसना सकलेश्वरेण
मुञ्चेत्यवोचमपतच्छिथिलोऽस्य हस्तः ।
स्वप्ने सखि क्षणत एव हतो भुजो मे
जग्राह कण्ठमयमस्तदयस्य तस्य ॥ १२ ॥

स्वप्ने हरेण सति निर्दयमारयुद्धे
लुप्तो न चन्दनरसः कुचयोरयं मे ।
नैवाधरेऽपि दशनक्षतमीक्ष्यते य-
ज्जाग्रग्गतादपि वरं सखि सुप्तभोगः ॥ १३ ॥

आविस्मितेन गिरिशेन हृता स लज्जा
निद्रागमे सखि गृहीतकराभ(ह)मासम् ।

आमूलकण्टकितपङ्कजनालकल्प-
मद्यापि पश्य चरितार्थमिदं प्रकोष्ठम् ॥ १४ ॥
रत्युत्सवाय मम लम्बितमीश्वरेण
वासोऽनिशं रति·········समागतेन ।
बोधेन तद्गलितमैक्षत हन्त गन्तुं
सोऽयं पुरा न खलु तिष्ठति चन्द्रमौली(लिः) ॥ १५ ॥
निद्रैव जीवितसखीं मनसैव सख्यो
यूयं मृषाप्रणयसंवरमाचरन्त्यः ।
या दुर्लभं गिरिसुतावरमद्य दूरा-
दानीय मे शयनमध्यगतं चकार ॥ १६ ॥
निम्नीकृतस्तनयुगं विहितोपगूह-
स्वप्नागतेन यदहं परमेश्वरेण ।
तेनैव हारगलिताः सखि पश्य मुक्ताः
सत्यं भवत्यनृतमेव कृतं शिवेन ॥ १७ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये स्वप्नोक्तिपद्धतिरेकोनचत्वारिंशत् ।

---

चत्वारिंशी पद्धतिः ।

स्वप्ने मुहूर्तमनुभूय पिनाकपाणिं
निःशेषलुप्तसरह(?)व्यसना युवत्यः ।
तेनैव नित्यमपि सेवितयौवनाया
गौर्याः प्रशस्तिगिरमात्मगतां शशंसुः ॥ १ ॥
सा शैलराजतनया वनितासु वर्या-
मालभ्य रूढिसुलभे विरहे हरेण ।
पादोदकायितजला मुहुरेव यस्या-
स्तन्मौलिदिव्यतटिनीपत(तट)योर्निपत्य ॥ २ ॥
सा पार्वती स्तनवती भुवने पृ(वृ)थान्याः
क्लेशावहा युवतयः स्तनमुद्वहन्ति ।

यस्याः पयोधरयुगेन मनोजशत्रो-
वक्षःस्थलेऽपि विहिता रतिमर्दमुद्रा ॥ ३ ॥

सा राजते जगति शैलसुता वधूनां
या जायते हरगलग्रहणोत्सवेषु ।
आनन्दनिर्भरतया मुकुलीकृताक्षी
मोहं गतेरवगरस्य महोष्मणैव ॥ ४ ॥

सैवोत्तमा जगति पर्वतराजपुत्री
पीत्वा यदीयमधरामृतमिन्दुमौलिः ।
आत्मीयमप्रतिमृदुः सह कालकूट-
क्ष्वेडोपतापमखिलं शमयांचकार ॥ ५ ॥

सा पार्वती विजयतां भुवनस्य माता
स्थेमानमाजगतमङ्गलभूषणस्य ।
निश्चित्य या गतभया विदधेऽभ्यनुज्ञां
भर्त्रा कृतस्य गरलाशनसाहसस्य ॥ ६ ॥

सौभाग्यजन्मवसतिः किल शैलकन्या-
कामाभिभूत्युचितमस्य····संविधातुम् ।
कण्ठे मुहुर्मदनशत्रुमपेतशङ्का
बध्नाति यानि भुजगद्वयशृङ्खलेन ॥ ७ ॥

सा राजते जगति पर्वतराजपुत्री
संभोगकेलिकलहे बहुशः प्रवृत्ते ।
ईशस्य मौलिपरितः परिपूर्णचन्द्रो
यूनां पुराश्रिकषणा कृशमेवमासीत् ॥ ८ ॥

सा पार्वती विजयतां जगदेकमाता
यस्या विहारकलहे सुलभे हरेण ।
पादाम्बुजाश्रयणकाङ्क्षितयैव तस्य
प्रागेव मौलिकुसुमान्मधुपाः श्रयन्ते ॥ ९ ॥

तप्तं तथैव हि तपो गिरिराजपुत्र्या
यस्या पिपास····म्रमे परमेश्वरेण ।
हस्ता····हो न मनसैव कृतः कृतोऽभू-
दग्न्याधि(?)रोहणमिषाच्चरणावलम्बम् ॥ १० ॥

सा पार्वती जगति भाग्यवती वधूनां
या रुष्टपार्थदृढमुष्टिनिपातपीडाम् ।
सद्यो जहार गिरिशोरसि घट्टितेन
कामोष्मणेन(व) कुचपुट्टलिकद्वयेन ॥ ११ ॥

धन्या गिरीन्द्रतनया खलु यद्भवेन
संध्याप्रणामसमये स पिनाकपाणिः ।
एवं निमीलति सरोरुहमद्य पश्य
गौरीत्युदीर्य करमीलनमातनोति ॥ १२ ॥

सा नायिका विजयतां प्रणयेन रुष्टा
या साक्रनाय(?) विनतस्य पुरार्दनस्य ।
प्रद्योतिताम्भसि कपर्दसुरस्रवन्त्यां
बाष्पैरपूर्वसरितं पुनरातनोति ॥ १३ ॥

तां पार्वतीमनिशमेव सदा स्वमेव
संध्याप्रणामसमये परमेश्वरस्य ।
कोपेन यारुणतनुच्छविराजभूत्वं
निर्यात्पुनः परिणता स्वयमेव संध्या ॥ १४ ॥

सौभाग्यजन्मवसतेर्गिरिराजपुत्र्याः
कुर्मस्तयोश्चरणयोरसकृन्नमस्याम् ।
नित्यं ययोः स्वयमलक्तकसंनिधित्सो-
श्चेटीजनेन सुलभः कलहः शिवस्य ॥ १५ ॥

दाक्षीयणीचिरसमीप्सितलाभहेतो-
र्विद्यासमस्तयुवतीस्पृहणीयवृत्ता ।

उन्मत्तवृत्तिरपि यत्सहचारसक्त्या
　　शंभुर्जगत्त्रयगरिष्ठकुसुम्बधुर्यः ॥ १६ ॥

नित्या हि सा भगवती गिरिराजकन्या
　　नम्रस्य केलिकलहेषु नवेन्दुमौलेः ।
मन्दाकिनीशिरसि या पदयावकेन
　　संध्यायमानसलिलामसकृत्करोति ॥ १७ ॥

सा पार्वती जगति विभ्रमजन्मभूमि-
　　र्यां याचते स्म गिरिशं(?) सुरसंघमध्ये ।
यन्मे व्यलीकमभवन्मदनाङ्गदाहा-
　　त्तत्क्षम्यतामिति करग्रहणच्छलेन ॥ १८ ॥

इत्युत्प्रेक्षावल्लभकृतौ भिक्षाटनकाव्ये गौरीप्रशंसापद्धतिश्चत्वारिंशत् ।

**समाप्तमिदं काव्यम् ।**

---